योगार्थे वर्थवशतो लिङ्गाद्य तस्य तर्क्यताम् ।
कामरूपी द्वयोर्नानावर्णे च कृकलासके ॥१२८१॥
बिम्बार्ये यौगिके त्वथवशतो लिङ्गमुन्नयेत् ।
कामला द्व रुजाभदे कामुके कामलस्त्रिषु ॥१२८२॥
कामलस्तु पुमानेष मतो मरुवस तयो ।
कामवान्कामिनि मतस्तस्य लिङ्गाद वाच्यवत ॥१२८३॥
कामव युदिताादारुहरिद्राया स्त्रियामियम् ।
कामवृद्धिलताभदे योगार्थेऽपि स्त्रिया मता ॥१२८४॥
भवे कामशर कामवाण चाम्रतरावपि ।
अथ कामसखश्चैत्रवस ताम्रतरुष्यपि ॥१२८५॥
कामाङ्कुशा नखे चैव मेहनेऽपि प्रकीर्त्तित ।
कामाङ्गश्चूतवृक्षे ना कामाङ्ग तु स्मराङ्कके ॥१२८६॥
कामा धा स्त्री मृगमद कामा घ कोकिले द्वयो ।
कामायुधो महाराजचूते मेढ्रे तु नप्स्मृतम् ॥१२८ ॥
कामिर्न्ना कामुके रया स्त्री कामि परिकीर्त्तिता ।
कामिका त तु माध्वीकमद्य क्ली त्रि तु यौगिके ॥१२८८॥
कामी द्व सारसे चक्रवाके पारावतेऽपि च ।
वाच्यवत्कामुके स्त्री तु कामिनी भीरुवन्दयो ॥१२८९॥
पुष्पवृक्षविशषेऽपि कामिनी कीर्त्तिता स्त्रियाम् ।
कामुक कमनेऽशोकपादपे चातिमुक्तके ॥१२९ ॥
कामो सव पुमा कामहर्षे चापि स्मरो सवे ।
काम्पल्या दशभदे च पुमा वृक्षा तरेऽपि च ॥१२९१॥
काम्बोज श्वेतखदिरे पुमा पु नागपादपे ।
काम्बोजी माषपर्ण्यां स्त्री द्वे तु कम्बोजवाजिनि ॥१२९२॥
काम्य ताम्रे त्रिस्तु कामसाधुकामयित ययो ।
काय शरव्ये निवहे स्वभावे च तनौ च ना ॥१२९३॥
काय प्राजापत्यतीर्थे क्लीब त्रिस्तु कदैवते ।
कायस्थो लेखकारये स्या नरजात्यन्तरे द्वयोः ॥१२९४॥

स्त्री कायस्था हरीतक्या चित्रगुप्ते मनास्तु ना ।
कायका प्रत्यह देहे ऋग वृद्ध्यन्तरे स्मृता ॥१ ९५॥
कायेन तु कृते चतत्कायिक स्यात्रिलिङ्गकम् ।
कार पुंसि क्रियाया च नृपभाग प्यथ स्त्रियाम् ॥१ ९६॥
कारक कर्त्तरि तथा हिंसकेप्यभिधेयवत् ।
क्रियानिवर्त्तके तु क्ली कर्मादौ कारक मतम् ॥१२ ७॥
कारण करण हेतौ स्त्रीनपोस्त्वपि कारणा ।
क्रियाया स्या कारयतेघाते च परिकीर्त्तिता ॥१२९८॥
कारणा तु स्त्रिया नीव्रवेदनाया प्रकीर्त्तिता ।
कार धमी कास्यकारे धातुवादरतेऽपि ना ॥१ ॥
कारवी वाष्पिकासञ्ज्ञपजे कृष्णजीरके ।
खराश्वारयाजमोदायां शतपुष्प्यापधानपि ॥१३ ॥
कारवी कीर्त्तिता क्षुद्रकारवेल्यामपि स्त्रियाम् ।
कारस्करो द्वयो राजवृक्षे क्ली नगरान्तरे ॥१३ १॥
पुमांस्तु गिरिभेदेऽथ नृभूम्नि स्युर्जनान्तरे ।
कारा प्रसेविकाया च तथा बन्धनवेश्मनि ॥१३ ॥
अक्ली तु बन्धने कारा कारी त्रि करयोगिनि ।
कारालिको वृक्षमात्रे पुंलिङ्ग खङ्गिखङ्गयो ॥१३ ३॥
कारि क्रियायां स्त्री कारि स्याच्छिल्पिन्यभिधेयवत् ।
कारिका नटभार्यायां शिल्पयातनयोरपि ॥१३ ४॥
कृतौ विवरणश्लोकेऽग्निनिष्ठाया च कीर्त्तिता ।
कारिता स्यात्स्वय दृष्टे ऋणवृद्ध्यन्तरे स्त्रियाम् ॥१३ ५॥
कारित्वेऽप्यथ निर्मापितेऽसौ स्यात्कारितस्त्रिषु ।
कारुरिन्द्रे विश्वकर्मण्यपि पुंसि प्रकीर्त्तित ॥१३ ६॥
द्वयोरपूर्वपुयोगवैश्याया व्रात्यत सुते ।
शिल्पिकारकयोस्त्वेष कारु स्यादभिधेयवत् ॥१३ ७॥
कारुज कलभे फेने वल्मीके नागकेसरे ।
गैरिके शिल्पिनां चित्रे स्वयज्ञाततृणेऽपि ना ॥१३ ८॥

कारुज कारुतो जाते त्रिलिङ्ग परिकीर्त्तित ।
कारोत्तर सुरामण्डे कूपे चापि पुमान्मत ॥१३ ९॥
सुरास्रावणपात्रेऽपि वैदले चर्मवेष्टिते ।
कार्त्तिकी कृत्तिकायुक्तपौणमास्या स्त्रिया मता ॥१३१ ॥
तत्पौणमासीयुक्ते तु मासे ना कार्त्तिको मत ।
कापटस्तु पुमानेष कीर्त्तितो जतुकार्षिणो ॥१३११॥
कार्मण मूलकर्माख्ये क्लीब मन्त्रादियोजने ।
कार्मणस्तु त्रिलिङ्गोऽय कथित कर्मकारिणि ॥१३१२॥
कार्मिकस्तु भवेद्राज्ञा शुल्के वधिकृते त्रिषु ।
कर्मणां तु समूहे क्ली कार्मिक परिकीर्त्तितम् ॥१३१३॥
कार्मुक चापमात्रेऽपि चापभेदे नपुसकम् ।
ना वेणौ त्रि प्रभवति कर्मणे कार्मुको मत ॥१३१४॥
कार्यं प्रयोजने क्लीब कर्त्तव्ये त्रिषु कीर्त्तितम् ।
स्यात्कार्यपुट उन्मत्तकृपणाऽनर्थकारिषु ॥१३१५॥
कार्षापणोऽस्त्रीपणषोडशके कार्षिकेऽपि च ।
कार्ष्णमिध्मप्रोक्षणे क्ली कृष्णसम्बन्धिनि त्रिषु ॥१३१६॥
क्ली तु कालायसे काल कालस्तु समये यमे ।
मृत्यौ चापि महादेवे कार्ष्ण्ये त्रिषु तु तद्वति ॥१३१ ॥
कालकस्तु पुमान्कायविकारेपि प्लुसञ्ज्ञके ।
रक्ते तु कालद्रव्येण पटादौ भद्यलिङ्गक ॥१३१८॥
कोपादिना च काले स्यान्मुखादौ कलतिर्यपि ।
तथैव कालपितरि कालको वाच्यवन्मत ॥१३१९॥
कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने ।
मयूरे पीतशाले च द्वयो स्यात्त शिवे पुमान् ॥१३२ ॥
कालकाऽङ्गारकारयस्य शकुनेर्योषति स्त्रियाम् ।
कालकुण्ड स्तु ना विष्णौ यमे चापि द्वयो पुन ॥१३२१॥
मनुष्यजातिभेदे च क्षत्रियाया निषादज ।
कालकूटो वोलविषयमनीवृज्जना तरे ॥१३२२॥

---

१ कालकुण्ठो वा ।

कालञ्जरो योगिचक्रमल्के भरवे गिरा ।
कालञ्जरी तु दुगायान्तथा कालञ्जरा भवेत् ॥१३२३॥
कालधर्मस्तु कालस्य धर्मऽपि मरणऽपि च ।
कालपुच्छस्तु चमरमृग ह यागिके त्रिषु ॥१३ ४॥
कालपृष्ठ कर्णचापे पुसि कङ्कानहङ्गम ।
कालमेघ कृष्णमेघे तथा भषजभिद्यपि ॥१३ ५॥
स्त्रियां तु कालमेषी स्यान्मसूरविदलाह्वय ।
लताजात्यन्तरे सोमराजिमञ्जिष्ठयोरपि ॥१३२६॥
द्राक्षायां च द्वयोस्त्वेषा काले मष प्रकीर्त्तिता ।
कालशेय गोरसे क्ली कलशीसम्भवे त्रिषु ॥१३२७॥
कालसार कृष्णसार तथा स्यात्पीतचन्दने ।
कालस्कन्धस्तमाले च तिन्दुके जीवकद्रुमे ॥१३२ ॥
तथा स्याच्छ्यामखदिरे यागिके लिङ्गमथत ।
काला मनःशिला मञ्जिष्ठा कृष्णात्रिवृतासु च ॥१३२९॥
कालानुसार्यं शैलेये जावकाख्ये विलेपने ।
कालिका स्विति सौराष्ट्रीसञ्ज्ञके भषजे भवेत् ॥१३३ ॥
प्रशान्ताग्नौ दग्धकाष्ठे मृगमदेऽस्य लक्षणम् ।
कालिका त्वसिता यद्वा कपोता पिङ्गबिन्दुका ॥१३३१॥
इत्येवमविवाह्याना कन्याना कन्यकान्तरे ।
अस्योक्त लक्षण कुब्जा दुदशा कालिका च सा ॥१३३२॥
अश्वस्य दन्तरेखाया सूक्ष्मजीरक एव च ।
मनोविकारप्रभवकायवैवर्ण्य एव च ॥१३३३॥
मेघजाले च चिक्रोडसञ्ज्ञप्राण्यन्तरेऽपि च ।
क्रयदेये वस्तुमूल्ये काञ्चीवृश्चिकपत्रयो ॥१३३४॥
धूसर्यां चणिकाभेद योगिनीभिन्नवाब्दयो ।
पटोलशाखारोमालीमांसीकाकाशिवासु च ॥१३३५॥
कालिकी तु स्त्रियां मासि मासिदेयेऽधमर्णके ।
ऋणवृद्धिविशेषेऽथ प्राप्तकाले त्रि कालिकी ॥१३३६॥

कालिङ्गो भूमिकर्कारौ द तावलभुजङ्गयो ।
कालिन्दी यमुनानद्यां कृष्णभार्या तरेऽपि च ॥१३३७॥
काली मृद्धा यामेकस्या शम्भोनवसु शक्तिषु ।
प्रसद्वार यवृद्ध यां भ्रकुटौ कृष्णनवाम्बुदे ॥१३३८॥
सप्तानामग्निहेतीनामेकस्यामेकमातरि ।
सप्तानामपि मातृणा याश्च शासनदेवता ॥१३३९॥
अहत्तीर्थकराणां तास्वेकस्या क्षीरकीटके ।
पिप्पलीवृश्चिका योश्च नील्यां कृष्णे तु जीरके ॥१३४ ॥
कालेय कालखण्डे स्या कलीना च कदम्बके ।
कलिना साम्नि दृष्ट च रागद्रव्ये च जापके ॥१३४१॥
कालेयो दै यभदे ना दार्व्यां च परिकीर्त्तित ।
कालेयस्तु त्रिलिङ्गो य कालसम्बाधिनि स्मृत ॥१३४२॥
काश्चक कृकवाकौ द्वे पीतमस्तककोकयो ।
कावेरी स्या सरिद्भेदे पुण्यनारीहरिद्रयो ॥१३४३॥
काव्य शुक्रे क्ली रसवद्वाक्ये स्त्री पूतनाधियो ।
काशो नस्त्रीक्षुग धायां काशा स्त्रीपुसयोस्त्विषि ॥१३४४॥
काशिर्ना काशतौ धानौ मुष्टौ काशाह्वये तृणे ।
भूम्नि नीवृद्विशेषेऽथ काशी वाराणसी स्त्रियाम् ॥१३४५॥
काश्मीरकुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयो ।
काश्मीरी कृष्णवर्णायां वचाया स्यास्त्रियामियम् ॥१३४६॥
काश्यपो मुनिभेदे च च द्रे चेक्ष्वाकुवशजे ।
द्वितीयनृपतौ पुत्रे मरीचेरपि पुस्ययम् ॥१३४ ॥
कश्यपस्य तु पुत्रे च मृगभेदेऽपि च द्वयो ।
काश्यपी तु स्त्रियां भूमौ मासे तु नपि काश्यपम् ॥१३४८॥
काष्ठा स्त्री कालभेदे स्यादष्टादशनिमेषके ।
स्थितौ दारुहरिद्रायां दिशि चाप्युपदिश्यपि ॥१३४९॥
दक्षिणोत्तरयोर यतरस्मिन्नयने रवे: ।
आदित्ये परमावस्थोत्कर्षयोराजिसञ्ज्ञिन ॥१३५ ॥

क

समप्रदेशस्याग्नेऽप्सु भूम्नि क्ली तु दारुणि।
कासिका छेदनद्र ये स्त्री वनस्पतिभिद्यपि ॥१३५१॥
त्रिस्तु कासयितर्येप कासक कासितर्यपि।
कार्मुर्गाग्विकले त्रि स्त्री याधौ शक्त्यायुध धियाम् ॥ १३५२॥
काहली स्त्री वाद्यभद सुपिरे परिकीर्त्तिता।
रथ्यावादे नपि त्रि स्याद्वाक्ये निष्ठुर आकुल ॥१३५३॥
किंशारुर्ना शस्यशूके विशिखे कङ्कपक्षिणि।
किंशुकस्तु पलाशे स्यादिङ्गुदे तत्फले तु नप ॥१३५४॥
किकीदिविस्तु ना वर्णे द्वे तु चापाह्वये खगे।
किखिरल्पकोष्टुजातौ कालमात्रान्तरे स्त्रियाम् ॥१३५५॥
किङ्करो ना रथांऽशऽथ द्वे दासे राक्षसे जने।
किङ्किणी घण्टिकाया स्त्री विकङ्कततरावपि ॥१३५६॥
किङ्किरोऽश्वे पिके भृङ्गे द्वे स्मरे तु पुमान्मत ।
किङ्किरात स्मरे पुसि द्वे शुके कोकिलेऽपि च ॥१३५ ॥
ना कुरण्टान्तरेऽशोके क्लीब तु प्रसवे तयो ।
किञ्जा पुभूम्न्युदीच्ये स्यान्नीवृद्भेद त्रि किम्भवे ॥१३५८॥
किञ्जल्क केसरे क्ली तु स्यादाकाशे च लाञ्छने।
किट्टालो वा लोहगूथ स्यात्ताम्रकलशेपि च ॥१३५९॥
किणो रूढव्रणस्थाने पुमान्स्याद्धासनान्तरे ।
किणिही स्यादपामार्गे गिरिकर्ण्यामपि स्त्रियाम् ॥१३६ ॥
किण्व स्यान्नग्नहूनाम्नि शीधुबीजे नपुसकम्।
तथैव पापे पिण्याके षण्डेऽन्यवदविक्रमे ॥१३६१॥
कितवो मत्तधुर्धूरवञ्चकद्यूतकृत्सु ना।
फले धुर्धूरवृक्षस्य क्लीब कितवमुच्यते ॥१३६२॥
किन्नर्यश्वमुखी चण्डालवीणापिङ्गलासु च।
किम्प्रश्नाक्षेपकुत्सासु तर्के कात्स्न्येंऽथ निश्चये ॥१३६३॥
किमु सभावनायां स्याद्वितर्के चापि दृश्यते।
किम्पाकः स्यान्महाकालफले चाज्ञे तथा पुमान् ॥१३६४॥

अथ किम्पुरुषो द्वे स्यात्किन्नरे क्ली तु भारतात् ।
उत्तरेऽनन्तरे वर्षे हेमकूटापराह्वये ॥१३६५॥
किरणस्त्वश्वरश्मौ च रश्मौ चापि पुमान्मत ।
किराटो म्लेच्छभेदेऽपि द्वयोर्वणिजि च स्मृत ॥१३६६॥
किरात स्वपकाये त्रिर्भूनिम्बे तु पुमानयम् ।
स्त्रिया चामरवाहिन्या कुट्टिनीदुगयोरपि ॥१३६ ॥
मर्यजात्यन्तरे तस्मिन्म्लेच्छभेदेऽपि च द्वयो ।
किरिर्द्वे सूकरे ना तु किरतावप्यनेहसि ॥१३६८॥
किरीटी नाऽर्जुने त्रिस्तु किरीटवति कीर्त्तित ।
किर्मी पलाशे शालाया हेमपुत्र्या च योषिति ॥१३६९॥
किर्मीरो नागरङ्ग च कर्बुरे राक्षसान्तरे ।
त्रि तु तद्गुणवति निष्ठाया तु नपुसकम् ॥१३ ॥
किलाऽव्यय स्यादतिथ्ये सभाव्यानुनयार्थयो ।
शिवे किलकिलो हर्षध्वनौ किलकिला मता ॥१३ १॥
किलासी तु पृषत्या स्त्री किलास पुसि सिध्मनि ।
किल्विषी वारनार्यां किल्विष पापरुगागसो ॥१३ २॥
किशोरस्तरुणाऽवस्थ त्रिषु द्वे त्वश्वशावके ।
सूर्ये तु तैलपर्ण्या च किशोर पुसि कीर्त्तित ॥१३७३॥
किष्किन्ध शैलभेदे ना किष्किन्धा त्वस्य कन्दरे ।
किष्कु प्रमाणभेदे स्याद्द्वादशाङ्गुलसम्मिते ॥१३७४॥
वितस्त्याख्ये चतुर्विंशत्यङ्गुले हस्तनाम्नि च ।
मानद्र्व्ये ना तपे च कुठारादित्सरौ द्वयो ॥१३ ५॥
किष्कुपर्वा पुमानिक्षौ वेणौ पोटगलेपि च ।
कीकटस्तु द्वयोरश्वे मेधवत्तु मितम्पचे ॥१३ ६॥
नीवृद्भेदे त्वनार्याणा निवासे पुसि भूमनि ।
कीकस त्वस्थनि क्लीब कृमिषु त्वणुषु द्वयो ॥१३ ॥
कीचको नाऽनिलरणद्वेणौ स्याले च भूपते ।
विराटस्याऽथ पूर्वोक्तवेणो क्ली प्रसवे मतम् ॥१३७८॥

कीटक कृमिजाता द्वे निष्ठुरे पुनरन्यवत् ।
कीनाशोऽग्नौ यमे पीतहरिते मिश्रवणके ॥१३ ९॥
पीतप्रधाने पुंसि स्याद्राक्षसे तु द्वयोस्त्रिषु ।
कदर्याऽनार्यभृतकृकृतघ्नेषु कृषीवले ॥१३८ ॥
पूर्वोक्तवणवद्द्रव्येऽप्यामममासाशकऽपि च ।
कीरा पुंभूम्नि कश्मीरेष्वथ द्वे तज्जने शुके ॥१३८१॥
कीरक आपण वृक्षभेदे क्षपणके पुमान् ।
कीरेष्ट स्याच्चूतजलमधूकाखोटशाखिषु ॥१३८ ॥
कीणश्चुरीनाम्न्यप्स्थाने त्रि दत्ताक्षिप्तहिंसिते ।
कीर्त्ति प्रसादयशसो स्त्रिया कीर्त्तयतौ तु ना ॥१३८३॥
द्व कीलोऽर्चिर्दा कफोणिशङ्कुस्तम्भ शिवे तु ना ।
कीलालमप्सु पक्वान्ननिष्यन्देऽन्नेऽमृतेऽसृजि ॥१३८४॥
कीशो दिगम्बरे पुंसि कपौ त्वेष द्वयोर्मत ।
कु पापे चेषदर्थे च कुत्सायां च निवारण ॥१३८५॥
कुकुन्दर कुक्कुरद्रौ नितम्बस्य च कूपके ।
कुकूल शङ्कुभि कर्णे श्वभ्रे ना तु तुषानले ॥१३८६॥
कुक्कुट्यनृतचर्य्यायां द्वयोस्तु चरणायुधे ।
भासेऽपि कुक्कुभे शूद्रान्निषादीतनयेऽपि च ॥१३८७॥
शूद्रायां मागधापत्ये निषादीवैश्ययो सुते ।
सुनिषण्णारण्यशाके तु तृणोल्कायां च कुक्कुट ॥१३८८॥
कुक्कुटाक्षोऽल्पतुम्ब्यां ना यौगिकाऽर्थे त्वय त्रिषु ।
कुक्कुरो द्वे सारमेये ग्रन्थिपर्णे नपुंसकम् ॥१३८९॥
कुक्षि पार्श्वेऽन्तरुदरे तुन्दे चेक्ष्वाकुसम्भवे ।
कुचन्दनोऽस्त्रिया पीतचन्दने रक्तचन्दने ॥१३९ ॥
कुचरस्तु कुवादे स्यात्कुचरे चाऽभिधेयवत् ।
कुचेल कुत्सिते वस्त्रे तद्वति त्वभिधेयवत् ॥१३९१॥
अविद्धकर्णीपाठाद्याख्ये कुचेला लतान्तरे ।
कुजो नाऽङ्गारके वृक्षे तथैव नरकासुरे ॥१३९२॥

कुजा कात्यायनीदेव्या भूमिज तु कुजस्त्रिषु ।
कुञ्चिका वङ्कुरारये स्या कपाटोद्घाटय त्रके ॥१३९३॥
तूलीस्लाचकयोर्भीरुभीषणे साधनेऽप्यथ ।
कीर्त्तित कुञ्चकश्चैव कुञ्चितयभिधेयवत् ॥१३९४॥
कुञ्चित तगरे क्लीब कुटिले वभिधेयवत् ।
कुञ्जोऽस्त्री गह्वरे द ते हनावपि लतागृहे ॥१३९५॥
ऋषिभदे तु पु लिङ्ग कुञ्ज एष प्रकीर्त्तित ।
कुञ्जरा पाटलाधातक्योर्ना केशे द्वयोर्गजे ॥१३९६॥
कुञ्जरारातिरुक्तो ना सिंहे च शरभेऽपि च ।
कुञ्जिका कुञ्जव लर्यां तथा स्यात्कृ णजीरके ॥१३९७॥
कुटस्तु पुसि कलशे गृहे तु द्वे कुटी कुट ।
कुटजो वृक्षभदे स्यादगस्त्यद्रोणयोरपि ॥१३९८॥
क्लीबलिङ्ग तु वृक्षस्य प्रसवे तस्य कीर्त्तितम् ।
कुट नटस्तु ना गुण्डुसञ्ज्ञवृक्षे नपि त्वद ॥१३९९॥
गोनदसञ्ज्ञके मुस्ताभदे प्रोक्त कुटन्नटम् ।
कुटपो ना मुनौ मानभेदे कुडवसञ्ज्ञके ॥१४  ॥
निष्कुटे चाथ कुटप कमले क्लीबमुच्यते ।
कुटरो मृगभेदे च वधकौ ना द्वयो खगे ॥१४ १॥
कुटल स्यादाभरण कुटला गात्रकृ यर्षौ ।
कुटिर्गृहेऽतिकुटिले नृस्त्रियो परिकीर्त्तिता ॥१४ २॥
कुटिल कुञ्चिते त्रि स्यात्क्लीब तु तगरे स्मृतम् ।
अथ स्त्रिया च तगरपाद्या स्यात्कुटिला स्त्रियाम् ॥१४ ३॥
स्त्रिया कुटिलिकाऽङ्गारापकषण्या च शिल्पिनाम् ।
कर्मारनाम्ना धान्य च कषकाणा प्रसृद्रताम् ॥१४ ४॥
पूलोत्क्षेपणवेणौ स्यात्परिव्राजां च भूतले ।
निधानस्य निषिद्ध वादण्डाना धारणाय यत् ॥१४ ५॥
स्यात्कम्बिग्रहणन्तत्र तथा चोरजनस्य च ।
यष्टयग्रप्रतिबद्धेऽन्यनिलयारोहणाय य ॥१४ ६॥

लोहककूटकस्तत्रापीय कुटिलिका मता ।
कुटी तु कुम्भदास्या स्त्री मुराया त्रिनगुच्छके ॥१४ ७॥
प न्यारये क्षुद्रगहे च द्वयोस्तु क्षत्रियात्सुते ।
कुक्कुटीसङ्गभार्यायामश्मकुट्टनवृत्तिके ॥१४ ८॥
कुटीरस्तु पुमा क्षुद्रागारे द्वे तु सकृकन् ।
कुटुम्ब नामनि तथा बा धने सन्तताविपि ॥१४ ५॥
ज्ञाता च पोष्यवर्गे च पुनपुसकयोर्मतम् ।
कुट्टि कुट्टयता पुमि स्त्रिया कुट्टि स्मृता यसि ॥१४१ ॥
शम्भल्या कुट्टनीच्छदकुत्सयो कुट्टना मता ।
कुट्टिमाऽस्त्री निबद्धाया भूमावपि कुटीरके ॥१४११॥
कुठारु पुमि वृक्षे स्याद्वानरे तु द्वयोमत ।
कुठि पुमा भवे वृक्षे पापे च वृपलालये ॥१४१२॥
कुठे रोगे तमारे त्रिना तु स्तम्बे कठिञ्जरे ।
कुडस्तु ना वैश्रवणे स्त्री घटे लाङ्गले कुडम् ॥ ४१३॥
द्वयो कुडी कु कुति शिशावपि च सकरे ॥
पलितीसङ्गयोषायामुत्पन्ने शूद्रपूरुषात् ॥१४१४॥
कुडङ्गोऽस्त्री निकुञ्जे च तथैव स्याच्छादिष्यपि ।
कुडुब पक्षिनीडेऽपि परिमाणान्तरे पुमान् ॥१४१५॥
कुडुम्बी सकुटुम्बे त्रिर्द्वयोस्तु स्यात्कपीवले ।
कुड्मलोऽस्त्री स्या मुकुले कुड्मलनरकान्तरे ॥१४१६॥
विद्यादासनभेदे च लक्षण यस्य कीर्तितम् ।
नागदन्तकमूर्ध्वज्ञोर्जानुस्थौ प्रसृतौ भुजौ ॥१४१७॥
सूचीमुखमिद पाणितलौ चेत्सहतौ मिथ ।
अर्धसूची तु तौ द्वौ चेत्प्रादेशान्तरितौ मुखात् १४१८॥
कुड्मल मुकुलीभूतौ तौ चेदूर्ध्वमुखौ स्थितौ ।
कुड्य विलेपने भित्तौ क्लीबं कौतूहलेऽपि च ॥१४१९॥
कुणपोऽस्त्री शवे द्वे तु कृमौ त्रिषु तु कुत्सिते ।
विटसारिकायां कुणपी क्ली पूये दोहदाम्बुनि ॥१४२ ॥

कुणाल कृतमाले ना पुत्रे चाशोकभूभुज ।
अथ क्लीब पुरभिदि कुणालमिति कीर्त्तितम् ॥१४२१॥
कुणिस्तु नान्दीवृक्षे च विकले च करे पुमान् ।
त्रिलिङ्गस्तु कुणिस्तस्मि यस्यास्ति विकल कर ॥१४२२॥
कुण्ठो मूर्खेऽथ कर्मण्ये चाऽतीक्ष्णोपि त्रिषु स्मृत ।
कुण्ड नपुसक स्थाल्या काञ्जिके वह्निगत्तके ॥१४२३॥
जलाशये च देवादे कुम्भे मानान्तरेऽपि च ।
कुण्डी कमण्डलौ स्त्री स्या कुण्डा तु जनिते मता ॥१४२४॥
जारेण पतिव न्या द्वे अविवाह्यासुतेपि च ।
कुण्डकीटस्तु चार्वाकव नाऽभिज्ञपूरुषे ॥१४२५॥
पतितब्राह्मणीपुत्रदासीकामुकयोरपि ।
कुण्डली चित्रलमृगे मयूरे भुजगे द्वयो ॥१४२६॥
पुमांस्तु वरुणे प्रोक्तस्त्रि तु कुण्डलवत्यसौ ।
कुण्डली स्त्री गुलू यां च काञ्चनद्रौ भवेदथ ॥१४२ ॥
पाशके वलये क्लीब कणवेष्टे त्रिकुण्डलम् ।
कुण्डी त्वश्वे द्वयोस्त्रिस्तु कुण्डवत्ययमिष्यते ॥१४ ८॥
कुतनुस्तु कुबेरे ना त्रि तु स्यात्कुत्सिताङ्गके ।
कुतप सूर्यवह्न्योर्ना वृषभेऽप्यतिथावपि ॥१४२९॥
भागिनेयेऽथ विप्र द्वे पुन्नपुसकयो पुन ।
दर्भेऽप्यह्नोऽष्टमे भागे तिलेच्छागजकम्बले ॥१४३ ॥
वाद्यवादकसामग्र्या नाट्यस्यास्तरणेऽपि च ।
सायमास्तरणे वाद्यवि यासे देहलावपि ॥१४३१॥
कुतली शाकभेदे स्त्री कुतलोऽस्त्री भुवस्तले ।
कुतूहल कौतुके स्या प्रशस्तेऽपि च दृश्यते ॥१४३२॥
कुत्राण तु भवे कुण्डे शिक्ये चैव नपुसकम् ।
कुत्सा स्त्रियां स्यान्निन्दाया पुस्यरर यमिधानके ॥१४३३॥
प्रमाणेऽपि च वज्रेऽपि तथा ऋष्यन्तरेऽप्यथ ।
तदपत्येषु बहुषु गोत्रारयेषु द्वयोरयम् ॥१४३४॥

स्यात्कुत्सित पर्युषिते निन्दिते त्राऽभिधयवत् ।
नपुंसकं तृण कुष्ठभेषजेऽपि च कुत्सितम् ॥१४३५॥
कुथः पुमान्कुशे वर्णकम्बले तु कुथा स्त्रियः ।
कुद्दालोऽस्त्री मतो गोदारणाख्ये खानसाधने ॥१४३६॥
पुमांस्तु कोविदारद्रौ क्लीबं तद्भ्रमणे मतम् ।
कुद्रः पुमान्समुद्रे च पर्वते च प्रकीर्तितः ॥१४३७॥
मनःशिलायां कुनटी नैपाल्यां द्वे तु कुनटी ।
कुनालिका पक्षिशाले कुनाल्यां च स्त्रियां मता ॥१४३८॥
कुन्तो गवेधुकायां स्यात्तथा प्रासायुधे पुमान् ।
कुन्ती तु स्त्री पृथायां स्यात्शल्लक्यामपि गुग्गुलौ ॥१४३९॥
कुन्तलश्चषके काले यत्रे केशे पुमान्मतः ।
कुन्तला तु नृभूम्नि स्यद्दक्षिणापथवर्तिनि ॥१४४० ॥
नीवृद्भेदे तथा मध्यदेशस्थे कुन्तलस्तु ना ।
तद्राजे तदपत्येषु कुन्तलाः स्युर्नृभूमनि ॥ १४४१॥
बहुष्वथ स्त्र्यपत्ये तु कुन्तली स्त्री प्रकीर्तिता ।
कुन्तिर्ना नृपभेदे तन्नीवृद्भेदे नृभूमनि ॥१४४२॥
राज्ञस्त्वस्य स्त्र्यपत्ये स्त्री कुन्ती कुन्तिरिति द्वयम् ।
कुन्तूसञ्ज्ञे स्नेहपात्र एलायां च प्रकीर्त्तिता ।१४४३॥
कुन्दः पुमान्मुकुन्दे स्यान्निधिभेदे भ्रमाभिधे ।
शस्त्रमार्जकयन्त्रे च शुक्लपुष्पाख्यपादपे ॥१४४४॥
माध्याख्यनाम्नि पुष्पे तु फले चास्य नपुंसकम् ।
कुन्दरस्तु भवेद्विष्णौ ना तृणे कण्डुराभिधे ॥१४४५॥
कुन्दुः पालङ्क्याख्यशाके पुंस्यथो मूषिके द्वयोः ।
कुन्दुमस्तु पुमान्मुञ्जे मार्जारे तु द्वयोर्मतः ॥१४४६॥
कुफाकुर्द्दे कपौ नाम्नि ख्योक्षि परतापिनि ।
कुबेरः पुंसि यक्षेशे नान्दीवृक्षे च कीर्त्तितः ॥१४४७॥
कुब्जो निखर्वे गङ्कुले त्रिर्ना वृक्षान्तरे गडौ ।
कुभ्रं गृहे कर्मणि क्ली कुभ्र कुम्भी गजे द्वयोः ॥१४४८॥

---

१ कुथा । २ कुर्वं ।

फ गुसङ्कटयो कुत्रस्त्रिलिङ्ग परिकीर्त्तित ।
कुमारो युवराजेऽश्वचारके वरुणद्रुमे ॥१४४९॥
कुत्सितायां मृतौ चाथ द्वयोर्बाले शुकेऽपि च ।
जम्बूद्वीपेऽथ त क्लीब कुमार जात्यकाञ्चने ॥१४५ ॥
कुमारी शैलतनया नवमाल्योर्नदीभिदि ।
सहापराजिताकुस्तुम्बुरीक यासु च स्त्रियाम् ॥१४५१॥
हिमामे मृगभेदे च नीवृत्तन्नृपभद्यो ।
मारस्तु कुत्सिता यस्य कुमारस्तत्र वा यवत् ॥१४५२॥
कुमुख कु सिताऽऽस्ये त्रि सूकरे तु द्वयोर्मत ।
कुमुद् क्ली कैरवे स्त्री तु कुमोदे कृपणे त्रिषु ॥१४५३॥
कुमुदोऽस्त्री रक्तपद्मे कैरवे च प्रकीर्त्तित ।
ना दिग्गजा तरे नागा तरेऽपि कपिभिद्यथ ॥१४५४॥
कुमुदा कटफले स्त्री स्याद्गम्भार्यां कुम्भिकौषधा ।
कुमुद्वा कुमुदप्राये देशे स्यादभिधेयवत् ॥१४५५॥
कुशपत्न्या तु कुमुदस्तम्बेऽपि स्त्री कुमुद्वती ।
कुमुल पु पहेम्ना क्ली का ते त्रिषु शिशौ द्वयो ॥१४५६॥
कुम्बा तु गहनाया स्त्री वृतौ स्याद्विदल तु नप ।
कुम्भ पुसि घटे हस्तिमूधपिण्डे महत्तरे ॥१४५ ॥
वेश्यापतौ सोमदत्ते राशौ च शनिदैवते ।
रक्षोभित्काभिल याज्योर्द्रोणार्यपरिमाणके ॥१४५८॥
तस्य द्वये विंशता च खारीण पञ्चविंशतौ ।
स्त्री तु स्था यन्तरे कुम्भी वारिपर्ण्यां च कटफले ॥१४५९॥
दधिम थनगर्गर्यां पृश्निकाया च पाटलौ ।
कुम्भा तु स्त्री त्रिवृद्वल्लौ कुम्भ तु नपि गुग्गुलौ ॥१४६ ॥
कटफलादेश्च मूलेऽपि प्रसवे च नपुसकम् ।
कुलत्थिकौषधौ कुम्भकारी द्वे तु कुलालके ॥१४६१॥
कुम्भयोनिरगस्त्ये स्याद्वसिष्ठ ोणयो पुमान् ।
कुम्भिक शालमीने च चौरश्लोकार्थचौरयो ॥१४६२॥

कुम्भी तु कुम्भव येष वाच्यवत्परिकीर्त्तित ।
कुम्भिनी वसुधाया स्त्री द्वयोस्तु गजनक्रया ॥१४६३॥
कुम्भीक पुसि पु नागवृक्षे त प्रसवे पुन ।
प्रसवे कुमुदस्यापि कुम्भीक स्यान्नपुसकम् ॥१४६४॥
कुम्भीनस सपमात्र द्वयोदर्वीकरा तरे ।
कुम्भीनसी स्त्रियामेषा लवणासुरमातरि ॥१४६५॥
कुम्भीरस्तु द्वयोर्मस्ये चौरे तु त्रिपु कीर्त्तित ।
कुम्भीलास्त्रषु चौरे च श्लाक छायादिहारिणि ॥१४६६॥
पुमास्त्वय स्या कुम्भीलो मत्स्ये स्यालाभिधानके ।
कुरङ्गो वानरेऽपि स्याद्वद्दे महाहरिणऽपि च ॥१४६ ॥
कुरङ्गको द्वे हरिण मुद्गपर्ण्यां कुरङ्गिका ।
कुरङ्गी तु स्त्रिया भोजतनयायाम्प्रकीर्त्तिता ॥१४६८॥
कुर टक पीतपुष्पाम्लानझिण्टोकयोर्मत ।
कुरण्डो मुष्टिवृद्ध्यारय रोगभदे पुमा मत ॥१४६९॥
स्तम्बे च किङ्किराताख्ये मत्स्ये त्वेष द्वयोर्मत ।
कुररी स्त्री भवेन्मेष्यामुत्क्रोश कुररो द्वयो ॥१४ ॥
गाजिह्वाया तु कुरसा स्त्रिया स्याद्विरसे त्रिषु ।
कुरीरस्तु पुमा मालाविशषे कम्बलेऽप्यथ ॥१४७१॥
कुरीर मैथुने पद्म जालेऽपि स्यान्नपुसकम् ।
कुरुस्तु प्रोच्यते पुसि ऋत्विग्राजर्षिभदयो ॥१४ ॥
नीवृद्भदे तु पुभूम्नि वर्षे चाप्युत्तराभिधे ।
कुरु टो दाहपुत्र्याम्भा झि टीम्लानप्रभेदयो ॥१४७३॥
भने कुरुबक शोणम्लाने कुरवकेऽपि च ।
भिण्ट्योश्च पीतारुणयो क्ली त्वेषा प्रसवे भवेत् ॥१४७४॥
कुरुमस्तु द्वयो कारौ भाजने तु पुमानयम् ।
कुरुली धन्विनां लक्षवेधे स्यात्कुरुलोलके ॥१४७५॥
कुरुविन्दो रत्नभदे मुस्तके हिङ्गुलेऽपि च ।
अर यक्षुद्रधा याना सप्तानामेकधा यके ॥१४ ६॥

---

१ वक ।

कुरूस्तु कुरुराजस्य स्यपत्ये स्त्री प्रकीर्त्तिता ।
कुर्वाणस्त्रिषु भृत्येऽपि कारकेऽपि प्रकीर्त्तित ॥१४ ॥
कुली स्याद्बदरीकण्टकार्यो र्येष्ठस्वसर्यपि ।
भार्याया स्त्रीकुल त्वेतद्दषीणाञ्जलतपण ॥१४७८॥
निकेतने सजातीयगण जनपदेऽन्वय ।
शैवसङ्घा तरे द्वे तु मार्जारे स्या कुला कुली ॥१४ ९॥
कुलको ना कुरवके व मीके काकात दुके ।
सपभेदे कुलाग्रयऽथ पञ्चादिश्लोकसहतौ ॥१४८ ॥
पटोलव या कुलक सयुक्ते तु त्रिषु स्मृतम् ।
कुलक्षया शूकशिम्ब्या कुलनाश कुलक्षय ॥१४८१॥
कुलात्थका कुला थारये भेषजे नृस्त्रियो पुन ।
कुल थधान्ये द्व तु स्यादेष दर्वीकरा तरे ॥१४८२॥
कुलाय पक्षिनीड च गृहे चापि पुमान्मत ।
एकाहक्रतुभदेऽथ त्रि कुलस्यायके भवेत् ॥१४८३॥
कुलाल कुम्भकारेऽपि कुक्कुमेपि द्वयोर्मत ।
चक्षुष्यारयौषधौ तु स्त्री कुलाली परिकीर्त्तिता ॥१४८४॥
कुलिको नागभेदे स्याद्द्रुभेदे कुलसत्तमे ।
कुलिशन्त्वस्त्रियां वज्र मत्स्यभेदे तु स द्वयो ॥१४८५॥
कुल्माष काञ्चिके क्लीब कुरुवि दमणौ पुमान् ।
व्रीह्यन्तरे सूपभक्त विदले च यवा तरे ॥१४८६॥
यवपिष्ट यावकारये पक्वमुद्गादिपिण्डके ।
वर्णे च शबले कु माषस्त्वेष त्रिषु तद्वति ॥१४८ ॥
कुल्य स्यात्कीकसेऽप्यष्टद्रोणीशूर्पामिषेषु च ।
रसे तु ना कटोश्चापि कषायस्य च मिश्रणात् ॥१४८८॥
गाढे तद्वति तु त्रि स्या कुलीने च नृभूम्नि तु ।
नीवृद्भेदेषु मध्योदग्दाक्षिणात्येषु कीर्त्तित ॥१४८९॥
कुल्या स्त्रिया स्या सरिति कृत्रिमाऽल्पसरित्यपि ।
जीव तिकाकण्टकारीकुलस यम्बुप्रणालिषु ॥१४९ ॥

कुव स्यादुत्पले क्लीब कुव स्त्रीपुसयो पशौ ।
अथात्पले कुवलय यौगिके र्थे तु लोकवत् ॥१४९१॥
कुवली स्त्री बदर्यां स्यात्तत्फलोत्पलयोस्तु नप ।
कुवेलमु पले क्लीब त्रिस्तु कुत्सितवेलके ॥१४९२॥
कुश ह्रीवेरजलया क्ली दर्भे तु कुशोऽस्त्रयाम ।
कुशस्तु रामपुत्रेऽपि योक्त्रे द्वीपान्तरे च ना ॥१४९३॥
कुशा निष्कृतिकाष्ठे स्त्री व गार जा च वाजिन ।
अयोनिकारे तु कुशी फालाख्ये च हलाग्रके ॥१४९४॥
पापिष्ठमत्तयास्त्वेष कुशो वाच्यवदिष्यते ।
कुशल त्रि क्षमे क्षमे निपुणे मङ्गलान्विते ॥१४९५॥
दीक्षितेऽप्यथ तत् क्लीब पणपर्याप्तिमङ्गले ।
कुशस्थल का यकु जम त्रवेदी कुशस्थली ॥१४९६॥
कुशिको ना मुनौ सर्पे द्वयोस्तु क्रोष्टुघूकयो ।
कुशलवो द्व वैदेहा लक्ष्मनप्लवनादिना ॥१४९ ॥
वर्त्तमाने सुतेऽम्बष्ठया नटानामपि विश्रुते ।
चारण च कुशीसज्ञाऽयोविकारलवे तु ना ॥१४९८॥
वाल्मीकौ च द्विवचने तूक्तौ रामस्य पुत्रयो ।
कुशेशय तु कमले विष्णौ तु स्या कुशेशय ॥१४९९॥
कुषा कु कपिवक्ष्यर्के ना परोत्तापिनि त्रिषु ।
कुषित क्ली भवेत्पापे निष्कृष्ट वभिधेयवत् ॥१५ ॥
कुष्ठोऽस्त्री परिभाव्याख्यग धद्रव्यौषधान्तरे ।
व्याधिभेदेऽप्यभूमिष्ठे कुष्ठ स्यादभिधेयवत् ॥१५ १॥
कुसीदमृणवृद्धौ क्ली ऋणवृद्धया च जीवने ।
मेघव वलसे वृद्धिजीविन्यपि च कीर्त्तित ॥१५ २॥
पुयागाच्च स्त्रियां वृत्तौ कुसीदायी प्रकीर्त्तिता ।
कुसुमोऽस्त्री फले नेत्ररोगे स्त्रीपुष्पपुष्पयो ॥१५ ३॥
कुसुम्भ कुङ्कुमे हेम्नि क्ली महारजनेऽपि च ।
स्त्रियां कुसुम्भी तत्स्तम्भे वरधान्ये कमण्डलौ ॥१५ ४॥

1 ककाः ।

कुसृतिस्तु कुमार्गे स्या कुगतौ शाठ्य एव च ।
कुहन पुसि व मीके त्रिरीर्ष्यालौ च मायिनि ॥१५ ५॥
कुहना स्त्री दम्भचयादम्भशीलत्वयोर्मता ।
मायाया त्वि द्रजाले च कुहन ङ्के तु मूषिके ॥१५ ६॥
कूच्युदश्विद्विकारे स्त्री नार्यां कूचस्त्विमे द्वयो ।
कूचिका सूचिकाया च तूलिकाया च कुडमले ॥१५ ॥
कपाटाङ्कुरके क्षीरविकृतावपि याषिति ।
कूटोऽस्त्री पुञ्जमायाद्येष्वद्रिशृङ्ग शरा तरे ॥१५ ८॥
अथ शलाकारये तुच्छे सीराङ्गे फालसञ्ज्ञके ।
अयोघने नृते दम्भ योम्न निश्चलय त्रयो ॥१५ ९॥
कूपो भूषितक यायां ना तु ग र्त्तोदपानयो ।
गुणवृक्षेऽपकूपे तु स्त्रिया कूपी प्रयु यते ॥१५१ ॥
कूप्य क्ली पाशुलवणे कूपसाधौ तु मेद्यवत् ।
कूबरु वस्त्रियां ग त्रीसमारये स्याद्रथा तरे ॥१५११॥
त्रिषु चारौ द्वयो कु जे नृलिङ्ग स्याद्यग धरे ।
कूच पशौ भग्नशृङ्गे त्रिरस्त्रीश्मश्रुपीठयो ॥१५१२॥
भ्रमध्ये क थने दर्भे तन्तुवायपरि छदे ।
तथा यतिपवित्रे च पादाङ्गुष्ठा तरेऽपि च ॥१५१३॥
स्त्री तु चित्रकराणां स्या कूर्ची लेखनसाधने ।
कूचिका मस्तुपिण्डे च सूचितूलिकयोरपि ॥१५१४॥
कपाटस्याङ्कुरे चापि स्त्रियामेषा प्रकीर्त्तिता ।
कूर्परस्तु कफोणौ च जानु यपि पुमान्मत ॥१५१५॥
कूर्म कूर्मी कच्छपे स्त्रीपुसयो परिकी र्यते ।
गजाङ्घ्रिदेशे तु नखात्परे कूर्म पुमा मत ॥१५१६॥
कूल तीरे चमूकक्ष्यां तटाके स्तूप एव च ।
कूलक न स्त्रिया स्तूपे पुसि स्यात्कृमिपर्वते ॥१५१ ॥
कूलङ्कषा स्त्रिया नद्या त्रि तु कूलस्य काषके ।
कूष्माण्डस्तु पुमा विघ्नराजस्य प्रियभृत्यके ॥१५१८॥

गणभदे शालिजातिभेदे अश्वा तरेऽप्यथ ।
फलवल्ल्य तरे तु द्वे कूष्माण्डी क्ली तु त फले ॥१५१९॥
अवतेहेड इत्यादिष्वृग्विशेषेषु नप्स्त्रियो ।
कूष्मा तु पुंसि श ये च वाताभावे च कीर्त्तित ॥१५२ ॥
कृकस्तु मृगभेदे स्याद्द्वयोरडग्रौ त्वय पुमान् ।
कृकरस्तु पुमांश्च ये वाते च परिकीर्त्तित ॥१५२१॥
कृकवाकुर्द्वे सरटकेकिकुक्कुटखञ्जने ।
कृ च्छ्र कष्टेऽप्यधर्मे क्ली तद्वति त्रिष्वथाऽस्त्रियाम् ॥१५२२॥
तपोमात्रे तथा प्राजाप यसा तपनादिषु ।
कृणकोऽय कृणयितर्यभिधेयवदिष्यते । १५२३॥
वीणावशशलाकाया कृणिका स्यास्त्रियामियम् ।
कृत हते निर्मिते त्रिभक्ताऽवस्थितकिङ्करे ॥१५ ४॥
क्लीब चादियुगेऽन्नादि पक्वह येऽक्षदविनाम् ।
अक्षवातप्रभेदे च स्तोम छ द प्रभदयो ॥१५ ५॥
अलमर्थे क्रियायाश्च कृतमेत प्रयु यते ।
कृतज्ञ कुक्कुरे द्व स्यादपकारविदि त्रिषु ॥१५२६॥
कृतमाल पुमा ग धद्रव्ये तक्कोलनाम्नि च ।
आरग्वधेऽथ द्वे कृष्णमृगभिद्धूकभेदयो ॥१५२ ॥
कृतवेधन इत्येष कोशातक्यन्तरे पुमान ।
भवे पृथुफले स्व पफले जात्य तरेऽस्य च ॥१५२८॥
कृता तो यमसिद्धा तदैवाकुशलकर्मसु ।
कृति स्त्रियां स्या करणे हिंसनेऽपि कृतेऽपि च ॥१५ ९॥
चतुरक्षरकच्छन्दोभेदेऽशी यक्षरेऽप्यथ ।
धात्वो कृणति कृन्त यो पुंल्लिङ्ग कृतिरीरित ॥१५३ ॥
कृती स्यात्पण्डिते योग्ये कुशले चाभिधेयवत् ।
कृत्त तु वेष्टिते छि नेऽप्यभिधेयवदिष्यते ॥१५३१॥
कृत्यन्तु मेधवत्क्रुद्ध लु धे भीतेऽवमानिते ।
विद्विष्टेपि च सर धे कर्त्तव्यप्रश्चित ययो ॥१५३ ॥

कृत्तनीये कृतिकृतकृत्यसाधौ च कीर्त्तितम् ।
प्रयोजने तु क्ली कृत्य स्यात्कृत्या त्वभिचारजे ॥१५३३॥
दवते च क्रियाया च स्त्रियामेषा प्रकीर्त्तिता ।
कृत्रिम कृतिनिवृत्ते त्रि क्ली कास्याख्यलोहके ॥१५३४॥
कृत्रिमो धूकधूपाख्यनिर्यासे पुसि कीर्त्तित ।
तुरुष्काख्ये च निर्यासे लवण च विडाह्वये ॥१५३५॥
कृत्स्न स्यात्क्लीबमुदके निखिले तु त्रिलिङ्गकम् ।
कृदरस्त्रिषु हिंस्रे स्यात्पुमास्तु खदिरे सिते ॥१५३६॥
कृन्तत्रो नाऽन्तरिक्षे च लाङ्गलाऽग्रे च लाङ्गले ।
द्व तु स्वर्णाभिघातार्थसाधने मशकेऽपि च ॥१५३ ॥
कृन्तरो वृक्षभेदे ना मक्षिके कार्ये एव च ।
आलोचने तु त्रिष्वेष कृन्तर परिकीर्त्तित ॥१५३८॥
कृपस्तु पुसि द्रोणस्य स्यालके परिकीर्त्तित ।
कृपणस्तु कृमौ द्वे स्यान्मन्दकुत्सितयोस्त्रिषु ॥१५३९॥
कृपा दयाया पत्न्या तु कृपी द्रोणस्य कीर्त्तिता ।
कृपाणी छुरिकाया स्त्री कर्त्तन्या सैनिकस्य च ॥१५४ ॥
अथ खड्गे कृपाणोऽसौ पुंल्लिङ्ग परिकीर्त्तित ।
कृपीटमुदरेऽपि स्यात्तोयेऽपि च नपुसकम् ॥१५४१॥
कृपीटपाल उद्दिष्ट केनिपातसमुद्रयो ।
कृमिघ्नी कृमिवत्कीटे लाक्षाया कृमिले खरे ॥१५४ ॥
कृवि पुमास्तु तुवायद्रव्ये रूपे द्वयोस्त्वसौ ।
कुविन्दे कर्त्तिकाख्य तु स्त्रिया नापितभाण्डके ॥१५४३॥
कृशस्तनौ वा यव स्यात्पुमान्केतुग्रहेष्वियम् ।
कृषको लाङ्गलाख्ये ना कूटाख्ये त्रि कृषिवले ॥१५४४॥
कृषि स्त्री कृषिभूमौ च कर्षणे च प्रकीर्त्तिता ।
धातौ तु कृषतावुक्त कर्षणे च पुमान् कृषि ॥१५४५॥
कृषिकस्तृणजातौ ना कृषिक लाङ्गले मतम् ।
कृष्ट त्रि सामगानस्य रीत्या यतमयान्विते ॥१५४६॥

प्राप्त च कृष्टिक्रियया कषण तु नपुसकम् ।
कृष्टि पुमा बुधे स्त्री तु कषण च जनेऽपि च ॥१५४ ॥
कृष्णान्नपुसक सीसे मरिच दारतेऽयसि ।
करमद फले चाथ पुमाविष्णौ च पावके ॥१५४८॥
ध्वान्तपक्षे व्रीहिभेदे व्यासे शुक्रे तथाऽर्जुने ।
मेघे कलियुगे चापि करमदद्रुमेऽपि च ॥१५४९॥
नीलवर्णेऽप्यथो न यथुक्ते चकितचेतसि ।
वा यलिङ्गो द्वयोस्तु स्या छुद्र व ये मृगप्ययरा ॥१५५ ॥
काककोकिलयोराखुजातिभदऽप्यथ स्त्रियाम् ।
कृष्णा स्याद्राजकाधा यपि पत्नीद्रापदीषु च ॥१५५१॥
जलूकाजातिभदषु द्वादशस्वपि प स्मृता ।
सविषास्तेषु चैकस्मि द्राक्षातिविपयोरपि ॥१५५२॥
हिरण्याद्याश्च या प्रोक्ता सप्तजिह्वा शिवागमे ।
अग्नेस्तास्वपि चैकस्या या दक्षिणदिशि स्थिता ॥१५५३॥
कृष्णवर्णस्तु सवर्त्ते वातुलेऽपि चलेऽपि ना ।
कृष्णव र्मा दुराचारे त्रिर्ना च द्रे च पावके ॥१५५४॥
कृष्णवृ ता तु पाटल्या माषपणाह्वयापधौ ।
कार्ष्मर्ये च स्त्रियां ना तु कृष्णवृन्त कुलत्थके ॥१५५५॥
कृष्णसपस्तु कृष्णोऽहौ द्वयोदर्वीकरा तरे ।
कृष्णसारा शिंशपाया ना स्नुह्या द्वे मृगा तरे ॥१५५६॥
कृसरस्त्विक्षुदितरौ मिश्रवर्णान्तरे पुमान् ।
त्रिस्तद्वति कशेर्वार ये तु क्लीब वारिगुल्मके ॥१५५७॥
सिततण्डुलमाषस्तु यवाग्वां कृसरा त्रिषु ।
केत पुमा स्यादिच्छाया तथा चिह्ननिवासयो ॥१५५८॥
केतन तु ध्वजे गेहे चापे चोपनिम त्रणे ।
अकार्यकृत्यदेहेषु सकेतस्थान एव च ॥१५५९॥
केतुर्ध्वजे च चिह्ने च ना अशो पातरश्मिषु ।
केतुमान्केतुयुक्ते त्रिश्छन्दोभेदे स्त्रियां मता ॥१५६ ॥

केतुमत्युदिता छन्दोन्तरे त्रिस्तु सकेतुके ।
केतुमाला नृभूदेशभदे तीर्था तरे स्त्रियाम् ॥१५६१॥
पुमानाग्नीध्रतनये क्लीब वर्षा तरे भवेत् ।
केद्रो वृक्षभदेऽथ त्रिषु स्यादेषके करे ॥१५६२॥
केदारो ना शिवेऽथाऽस्त्री शालिक्षेत्रालवालयो ।
पुण्यस्थानविशेषे च क्षेत्रे भूम्य तरेऽपि च ॥१५६३॥
केनार कुम्भिनरके शिर कापालसधिषु ।
केरलास्तु नृभूम्नि स्युदक्षिणापथवर्त्तिनि ॥१५६४॥
नीवृद्भेदऽथ तद्द्शसम्भूतेषु नृषु द्वयो ।
तद्राजे तु पुमा ज्ञेय केरल स्त्री तु केरली ॥१५६५॥
तद्राज यस्न्यपत्ये स्यात्तथा स्याद्भेषजा तरे ।
त्रिषु केलिकिल क्रीडाशीले ना तु विदूषके ॥१५६६॥
कूष्माण्डारये शिवगणे हेरम्बस्य प्रियङ्करे ।
केवलस्तु त्रिरेकाकिकृत्स्नयोरवधारिते ॥१५६ ॥
ज्ञाने तु पूर्णे क्लीब स्यान्निणये चाऽवधारणे ।
केवलस्तु पुमानेष कुहने परिकीर्त्तित ॥१५६८॥
केश स्यात्पुसि वरुणे ह्रीबेरे कुन्तलेऽपि च ।
केशपाशी तु चूडार्थे स्त्री ना केशकलापके ॥१५६९॥
केशरस्तु हरौ पुसि द्वे छागे त्रिषु तूत्कटे ।
केशव केशिनि त्रि स्याद्वि णुपुन्नागयो पुमान्॥१५ ॥
त्रि केशवप्रियो योग पुसि वेङ्कटपर्वते ।
स्त्री केशवानुजा दुर्गादे यां योगे यथायथम् ॥१५७१॥
क्ली केशवायुध विष्णवायुधे च रथचक्रके ।
केशी केशवति त्रि स्या पु लिङ्गो दानवा तरे ॥१५७२॥
कशिनी तु भवेच्चोरपुष्पीस्तम्बे स्त्रियामियम् ।
केशी स्त्रियां स्या चूडायां केश पुसि शिरोरुहे ॥१५ ३॥
किरणे च भगे चैव ह्रीबेरे च नपुसकम् ।
केसरस्त्वस्त्रियां पुष्पकिञ्जल्केऽप्यश्वसिंहयो ॥१५७४॥

सटे च मातुलुङ्गाख्यफलस्या तद्गवास्पदे ।
सूक्ष्मकेशे रामठऽथ वकुले नागकेसरे ॥१५ ५॥
पुन्नागे वेङ्कटाख्ये ना पवते केसरा पुन ।
कार्पास्यां स्यात्स्त्रियां क्ली तु प्रसवेऽप्रोक्तभूरुहाम् ॥१५७६॥
केसरी तु पुमान्सिहे मातुउङ्गे तुरङ्गमे ।
पुन्नागे चाप्यथो भेद्यलिङ्ग केसरवत्यसौ ॥१५ ७॥
कैटभोऽसुरभदे स्याद्दुर्गादेया तु कैटभी ।
कैडर्यस्तु पुमान्निम्बे कटफलाख्ये च पादपे ॥१५ ८॥
मदनाख्ये द्रुमेऽथैषान्तरूणाम्प्रसवे नपि ।
कैतव कपट द्यते नपुसकमुदीरितम् ॥१५७९॥
कैरव कितवे शत्रौ तथा पुल्लिङ्ग इष्यते ।
कैरव कुमुदे क्लीव चन्द्रिकाया तु कैरवी ॥१५८ ॥
किरातसम्बन्धिनि तु कैरात त्रिषु कीर्त्तितम् ।
कैराती तु स्त्रियामूर्ध्वाऽधोगतौ क्षिप्रपत्रिण ॥१५८१॥
कैवल्य केवलत्वे च मोक्षे चाऽपि नपुसकम् ।
कौशकी नाट्यवृत्यन्तरे स्त्री क्ली केशवृन्दके ॥१५८२॥
कोकश्चक्रे वृके ज्येष्ठ्यां खजूरीद्रुमभेकयो ।
कोक कोकीवृके भेके चक्रवाकेऽपि च द्वयो ॥१५८३॥
पुमांस्तु कोक आदाने ज्येष्ठ्यां खेजूरिकातरौ ।
क्लीव कोकनद रक्ताऽब्जे रक्तकुमुदेऽपि च ॥१५८४॥
कोकिल पक्षिभदे द्व ना तु तूले प्रकीर्त्तित ।
कोटक कुञ्चितरोष त्रिलिङ्ग परिकीर्त्तित ॥१५८५॥
कोटि स्त्री चापमात्रेऽश्रौ प्रकर्षे शकलेऽपि च ।
चापाग्र च तथा सख्याभेदे लक्षशतात्मनि ॥१५८६॥
स्त्री कोटिका भवेत्कृष्णे मण्डूके श्वेतवक्त्रके ।
कोटिर पुसि नकुले शक्रगोपकशक्रयो ॥१५८७॥
कोटिवर्षम्पुरे देवीकोटनाम्नि नपुसकम् ।
स्त्री कोटिवर्षा स्पृक्कायां योगार्थे तु यथायथम् ॥१५८८॥

कोट्टङ्क स्याद्द्वयो क्षुद्रे मृगे जन्तुघराऽभवे ।
इन्द्रकोशाख्याऽवयवे पुस्यथ वेश्मनो मत ॥१५८९॥
कोट्टारो नरके कूपे पुष्करिण्याश्च पाटके ।
कोणो वाद्यप्रभेदे स्यादेकदेशे गृहादिन ॥१५९ ॥
शनैश्चरे चौलगुडे श द कोणा तु नप्स्त्रियो ।
नाव्यवादनभदे द्वे कोण कोणीति सैरभे ॥१५९१॥
कोणिका तु स्त्रिया नीडे कोणितर्येष भेद्यवत् ।
कोथो ना नेत्ररोगस्य भेदेऽथ शठिते त्रिषु ॥१५९२॥
कोदण्ड वेणुचापे च चापे चतुररत्निके ।
धनुर्मात्रेऽपि च क्लीब पुसि स्यान्नोवृद तरे ॥१५९३॥
कोमल क्ली जले स्वर्गे ना मृदु येष वाच्यवत् ।
कोरो वृक्षाङ्कुरे बालकसुमे च पुमा मत ॥१५९४॥
कोरकोऽस्त्री कुडमले स्या कक्कोलकमृणालयो ।
अथाभिधेयव प्रोक्त श द्कारणि कोरक ॥१५९५॥
कोल व्योषेऽधकर्षे च तक्कोले बदरीफले ।
शुण्ठ्यां चव्य तु कोला पिप्पल्यां शस्त्रे पुरा तरे ॥१५९६॥
कोल प्लवेशनोशित्रेऽङ्कपालौ भेलकौषधे ।
द्वे त्वाखा सूकरे चाथ खञ्ज कोलस्त्रिषु स्मृत ॥१५९ ॥
कोलकम्मरिचे क्लीब कक्कोले चाथ कोलिका ।
द्रुतद्रुमारोहशीले जन्तौ मूषिकसन्निभे ॥१५९ ॥
निर्विषाहिप्रभेदे च स्त्रियामेषा प्रकीर्त्तिता ।
कोशोऽस्त्री कुडमले पात्रे दिव्ये खड्गपिधानके ॥१५९९॥
जातिकोशेऽर्थसङ्घाते पेश्या शब्दादिसग्रहे ।
पुस्तके वेष्टकद्रव्ये शस्त्रे प्रजननेऽपि च ॥१६ ॥
वृषणे कृमिनीडे च कौशेयप्रकृतावपि ।
कृताकृते हेमरूप्ये पद्मव्रज्यावलावपि ॥१६ १॥
अरन्ध्रे चापिरन्ध्रे च स्त्री तु कोश्यल्पकोशके ।
वारिवाहे तु न पुमानेष कोश प्रकीर्त्तित ॥१६ २॥

कोशकस्तु पुमानेष कीर्त्तित पत्रता तरे।
क्ली तु कोशफल जातिफले तक्कोलकेऽपि च ॥१६ ३।
स्त्री तु कोशफला राजकोशातक्या प्रकीर्त्तिता।
कोशातक्या तथा तिक्तकाशातक्यामपीष्यते ॥१६ ४॥
कोशिका तु स्त्रिया दीपाधारे स्या मल्लिकाभधे।
कोष्ठो न स्त्री कस्थलेऽ त कुक्षाव तगृहेऽपि च ॥१६ ५॥
कोसला मध्यदशस्थे नीघृद्भेदे नृभूमनि।
मुनौ ना कोसल श्यामपाण्डरे त्र तु तद्वति॥ ६ ६॥
कोहली तु स्त्रियां ज्ञेया कूष्माण्डारयलता तरे।
भृश मुखरकन्यायां कूष्माण्डप्रसवे तु नप् ॥१६ ७॥
आवेशमाजि तु गृहशुनके कोहलो द्वयो ।
मर्त्यजात्य तरऽम्बष्ठया वैश्याज्जाते तथा मत ॥१६ ८॥
कोहलो वाद्यभदे ना नाट्यशास्त्रप्रवक्तरि।
काकिलोऽक्ली विधिभिदि त्रिस्तु कोकिलयोगिनि॥१६ ९॥
कौकूटिको दाम्भिके त्रि स्या चादूरेरितेक्षणे।
कौक्कृ यमनुतापे स्यादयुक्तकरणऽपि च ॥१६१ ॥
कौक्कट क्लीबमायासे त्रि तु कुक्कुटयोगिनि।
कौणपो नरके ना द्वे राक्षसे त्रि तु यौगिके॥१६११॥
कौतुकम्मङ्गले क्लीब हषनर्मोत्सवेषु च।
विवाहसूत्रे विषयभोगे कामे कुतूहले॥१६१२॥
कौन्तो हरेणौ स्त्री कु तसम्बन्धिनि तु भेद्यवत्।
कौपीन क्ली गुह्यकीराकार्यकक्षापुटेष्वपि॥१६१३॥
कौमुद कार्त्तिके ना स्यात्पूर्णिमायाश्च कौमुदी।
स्त्रीलिङ्गे चन्द्रिकाया चाथ त्रि कमुदयोगिनि॥१६१४।
कौम्भ कुम्भाश्रिते त्रि स्यात्कौम्भन्त्वा ये दशाब्दिके।
कौलटेय कौलटेरो नृस्त्रियोर्बन्धकीसुते॥१६१५॥
सुतस्तु सत्या भिक्षुक्या अटन्त्या स्यात्कुलानि य ।
तस्मिन्कौलटिनेयारये कुलटायास्सुतेऽपि च॥१६१६॥

कौलीन लोकवादे च युद्धे पश्वहिपक्षिणाम् ।
अपवादे कुलीनत्वे गुह्यज मककर्मसु ॥१६१ ॥
कौलेयक शुनि द्वे स्यात्कुलीने तु त्रिषु स्मृत ।
कौश कुशस्थलपुरे वा यवत्त कुशाश्रिते ॥१६१८॥
कौशिको गुग्गुलौ चेन्द्रे ना द्व तु कुशिकात्मजे ।
यालग्राहिण्युलूके च नकुले च प्रकीर्तित ॥१६१९॥
कौशिक क्ली मज्जधातौ कौशिकी तु स्त्रियामियम् ।
पावर्त्यां लि छविस्थे च कीर्तिता सरिद तरे ॥१६२ ॥
कौसला स्यादयोध्याया त्रिस्तु कोसलयोगिनि ।
कौसुम्भ तु कुसुम्भाञ्जने कुसुम्भेऽप्यरण्यजे ॥१६२१॥
क्रकच करपत्रेऽस्त्री ग्रथिलाख्यतरौ पुमान् ।
क्रकरस्तु करीरद्रौ दीनक्रकचयोश्च ना ॥१६२२॥
द्वयोस्तु पक्षिभदऽसौ क्रकर परिकीर्तित ।
क्रतुमु य तरे यज्ञधीसक पक्रियासु ना ॥१६२३॥
क्रन्दन क्ली क्रन्दितवद्रोदनाह्वानयोर्मतम् ।
क्रमोऽङ्घ्रौ परिपाट्यां च वेदपाठा तरे विधौ ॥१६२४॥
क्रान्तौ स्थानकभदे च द्वे वारवाह्वयमूषिके ।
क्रमणश्चरणे क्रा त क्रमणो द्व तुरङ्गके ॥१६२५॥
क्रमुक पट्टिकालोध्रे ब्रह्मदारुद्रुमेऽपि च ।
पूगद्रुमे भद्रमुस्ते क्रमुक तु नपुसकम् ॥१६२६॥
प्रसवेऽप्युक्तवृक्षाणान्तथा कार्पासिकाफले ।
क्रमेलको द्वयोरुष्ट्रे नि व्यादुग्रीसुतऽपि च ॥१६२ ॥
क्रव्याद प्रेतदाहाग्नौ त्रिर्मांसादे द्वि राक्षसे ।
क्रिमिर्ना भूचरे क्षुद्रज तुभेदे च लाक्षिके ॥१६२८॥
द्वे तूणनाभे करणीवैदेहकसुतेऽपि च ।
क्रिमिघ्नो ना विडङ्गे त्रि क्रिमिह तर्यमानुषे ॥१६२९॥
क्रिमिज स्यादलक्तेप्यगुरौ क्ली त्रिस्तु यौगिके ।
क्रिमिरो ना भवेद्वर्णे सितलोहितमिश्रिते ॥१६३ ॥

त्रि तद्वति स्त्री क्रिमिरा मृगभदे बिलेशये ।
क्रिया स्त्री निष्कृतो शिक्षाचिकित्सापायकर्मसु ॥१६३१॥
करणारम्भपूजासु चेष्टायां सम्प्रधारणे ।
प्रतिष्ठायां च राशौ तु मेषाख्ये ना क्रियो मतः ॥१६३२॥
क्रियाकारः सारादि च क्रियाया करणे पुमान् ।
क्रीडा नर्मणि लीलायामज्ञानेऽपि मता स्त्रियाम् ॥१६३३॥
क्रुश्वा द्व क्रोष्टुवकयोः शिराया क्रुश्वरी स्त्रियाम् ।
क्रुष्ट सामस्वराणा स्यात्सप्तानामादिमे पुमान् ॥१६३४॥
रुदिते क्ली त्रि तु क्रुष्टिक्रियायाः कर्मता गते ।
क्रूरोऽभिधेयवत्क्रुद्धे दारुणे कठिनोष्णयोः ॥१६३५॥
घोरेऽपि च नृशंसे च गुणमात्रे तु पुंस्ययम् ।
क्रूरा स्त्री बदरीकण्टकार्यां क्रूरं तु कौरुसे ॥१६३६॥
क्रूरदृक् पिशुने वाच्यलिङ्गः पुंसि शनैश्चरे ।
क्रयिणि स्त्री विक्रये काले क्रियतां चित्त च तव्रते ॥१६३७॥
क्षेत्रादे फलभोगाय दत्त्वा किञ्चित्परिग्रहे ।
क्रोड कर्षे तथो सङ्गे क्रोड क्रोडी च सूकरे ॥१६३८॥
क्रोड क्रोडा चोरसि स्यात्क्रोडो ना शनिरक्षसो ।
क्रोधनो द्वे शुनि त्रिस्तु कोपे शीले नपि क्रुधि ॥१६३९॥
क्रोश सामान्तरे क्रोशो योजनार्धे च क्रोशने ।
क्रोष्टा क्रोष्ट्री शृगाले द्वे क्रोष्ट्री तु स्यात्स्त्रियामियम् ॥१६४० ॥
लाङ्गल्याख्यौषधे क्षीरविदार्याख्ये च भेषजे ।
क्रौञ्चो द्वीपे तृतीयेऽस्य जम्बूद्वीपस्य ना गिरौ ॥१६४१॥
तन्नाम्न्यथ क्ली स्यात्सामान्तरेऽथ क्रुङ खगे द्वयोः ।
सम्बन्धिमात्रे तु क्रुञ्च क्रौञ्चं स्याद्वाच्यलिङ्गकः ॥१६४२॥
क्रौञ्चादनं तु पिप्पल्यां चिञ्चाटकमृणालयोः ।
क्लीतकं क्ली करञ्जस्यैकबीजे मधुरौषधे ॥१६४३॥
क्लीतकी तु स्त्रियामेषा नीलिसञ्ज्ञौषधे स्मृता ।
क्लीबोऽस्त्रियां मतः षण्ढे त्रिर्निर्वीर्ये च निष्फले ॥१६४४॥

क्लेदो मुखप्रसेक च स्यात्पुस्योषधिच द्रयो ।
क्लेदु क्षेत्रे शरीरे च भङ्ग च द्र पुमा मत ॥१६४५॥
क्लेशो दु खेऽपि कोपेऽपि व्यवसायेऽपि दृश्यते ।
क्लेशक्रस्तु यमे नाऽथ क्लेष्टरि क्लेशितर्यपि ॥१६४६॥
तथा क्लेशयितर्येन मेघलिङ्ग प्रचक्षते ।
क्वथ स्यादतिदु खेऽपि निष्पाकेऽपि द्रवस्य च ॥१६४ ॥
क्ष सवर्त्ते राक्षसे च नरसिंहे च विद्युति ।
क्षेत्रे नाशे क्षेत्रपाले पुमानेष प्रकीर्त्तित ॥१६४८॥
क्षणस्त्ववसरे मध्ये पारतन्त्र्ये तथोत्सवे ।
मुहूर्त्ते षष्ठभागे च नाड्या कालेऽतिसूक्ष्मके ॥१६४९॥
निर्व्यापारस्थितौ पुंसि व्यापारे चाऽप पर्वणि ।
क्षणदो गणके रात्रौ क्षणदा क्षणदञ्जले ॥१६५ ॥
क्षणिक क्षणमात्रस्थायिनि त्रि क्षणव यपि ।
क्षणिका तु स्त्रियामेषा सौदाम यामुदीरिता ॥१६५१॥
क्षत व्रणे क्ली क्षणने लग्ना षष्ठे च राशके ।
त्रिलिङ्ग पुनरेतत्स्या खण्डिते च हते तथा ॥१६५२॥
क्षत्ता ना सारथौ द्वा स्थ दूते मुसलरुद्रयो ।
वेधस्यथ क्षत्रियाया पारशैनुकसञ्ज्ञक ॥१६५३॥
शूद्राज्जातो योऽत्र केचिद् ये वायोगवाह्वये ।
वैश्याया जनिते शूद्रादन्ये पारशवाह्वये ॥१६५४॥
ब्राह्मणादूढशूद्राया जाते प्रेष्यासुते द्वयो ।
वाच्यवत्तु निवृत्तेप्यविनीतेऽपि मृते तथा ॥१६५५॥
क्षत्र तु स्याद्धने तोय क्षात्रये च नपुसकम् ।
द्वे क्षत्रिय स्याद्राज ये क्षत्रिया क्षत्रियाण्यपि ॥१६५६॥
जातौ स्त्री वेऽथ पुयोगे क्षत्रियीति स्त्रियां भवेत् ।
क्षपा स्त्रियां भवेद्रात्रौ धान्यस्तम्बे तु ना क्षप ॥१६५ ॥
गोऽजाऽविमहिषाणाङ्क्वात्याद्रच्छगणके जले ।
क्षमा क्षान्तिपृथिव्यो स्त्री त्रिषु योग्यसमर्थयो ॥१६५८॥

१ नियुक्ते वा ।

नाग्ये हिते च क्लीबे तु क्षम युक्ताथकम्मतम् ।
क्षयस्त्वपचये कक्षो क पा त राजयक्ष्मणि ॥१६५९॥
मन्दिरे च निवासे च हिंमाया गमनेऽपि च ।
क्षरो धाराधरे पुसि सलिले तु नपुसकम् ॥१६६ ॥
क्षता प्रानटसमाख्ये स्त्री क्षरी क्षरितरि त्रिषु ।
क्षव क्षुते राजिकाया कासे चापि पुमान्मत ॥१६६१॥
क्षवथुस्तु क्षुते कासे पु लिङ्ग परिकीर्त्तित ।
क्षामस्तृणाग्नौ ना क्षीणे त्रिषु क्षामा स्त्रियाम्भुवि ॥१६६२॥
क्षार स्या स्वर्जिकाक्षारे गुडे काचाख्यमृद्यपि ।
क्षरणे भस्मनि तथा धूर्त्ते च लवणे पुमान् ॥१६६३॥
सजाते मिश्रणात्त्रिस्तु तद्वत्येष प्रकीत्तित ।
रसे च तिक्तलवणयोगो थ त्रि तु तद्वति ॥१६६४॥
क्षारक पक्षिम स्यादिपिटके पुष्पजालके ।
क्षारतृक्षारयित्रोस्तु भेद्यव क्षारको मत ॥१६६५॥
क्षारित स्राविते क्षारे चाऽभिशस्तेऽपि च त्रिषु ।
क्षालनोऽरत्निके षष्ठे यस्य यूपस्य सप्त च ॥१६६६॥
दश चारत्नयोर्मान तस्य स्त्रीक्लीबयो पुन ।
क्षालन क्षालना चेति कृतौ क्षालयतेर्भवेत् ॥१६६ ॥
क्षितिजने निवासे स्त्री कालभे च क्षये भुवि ।
क्षित्वा ना केशवे वायौ क्षित्वरी स्त्री सरिन्निशो ॥१६६८॥
क्षिपण्युस्तु पुमान्देहे सुरभौ वाच्यलिङ्गक ।
क्षिपण्युस्ताडिति स्त्री ना वस तार्थायुधेऽनिले ॥१६६९॥
क्षिप्र तु पादाङ्गुष्ठस्य तर्ज याश्चान्तरे न पुम् ।
असत्त्वेऽपि च शीघ्रार्थे त्रि तु स्यात्सत्त्वगामि चेत् ॥१६७ ॥
क्षियाक्षये तथाचाराऽतिक्रम च स्त्रिया मता ।
क्षीर क्ली सलिले दुग्धेऽ येर्धर्चादिष्वधीयते ॥१६ १॥
क्षीरशुक्ला विदार्यां स्त्री ना तु शृङ्गाटकाह्वये ।
क दार्थजलजस्तम्बे यौगिके लिङ्गमथत ॥१६ ॥

क्षीराब्धिजं तु सामुद्रलवणे मौक्तिकेऽपि च ।
पुमांस्तुषारकिरणे कमलायां तु योषिति ॥१६७३॥
क्षीराशस्तु द्वयोर्हंसे क्षीरस्य त्वाशके त्रिषु ।
क्षीरिको राजिलाहौ द्वे क्षीरका तु स्त्रियामियम् ॥१६७४॥
दुग्धिकासञ्ज्ञकस्तम्बे फलेऽप्यक्षारव्यपादपे ।
क्षुणास्त्रिषु स्यादु मत्ते क्षोभक्रोधरुजासु ना ॥१६७५॥
क्षुद्रो दरिद्रे कृपणे त्रि क्रूरेऽपनिकृष्टयोः ।
क्षुद्र इत्येष पुंलिङ्ग उत्सवे परिकीर्त्तितः ॥१६७६॥
क्षुद्रकम्फाणिताख्यायां गुडस्य विकृतौ मतम् ।
तथैव कूप्यलवणे द्वयोस्तु क्षत्रियान्तरे ॥१६७७॥
क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च ।
चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि ॥१६७८॥
क्षुप्रं कण्टकिगुल्मे च तुहिने च नपुंसकम् ।
क्षुमाऽतसीनीलिकयोः स्त्रियामेषा प्रकीर्त्तिता ॥१६७९॥
क्षुरो नापितशस्त्रे ना कोकिलाक्षे च गोक्षुरे ।
क्षुरकः कोकिलाक्षे च गोक्षुरे तिलकद्रुमे ॥१६८०॥
क्षुरप्रो नाऽर्धचन्द्राख्यशस्त्रेऽथाश्वान्तरे द्वयोः ।
क्षुल्लकोऽल्पे च नीचे च दरिद्रचाभिधेयवत् ॥१६८१॥
क्षेत्रं तीर्थे क्षितौ व्योम्नि शरीरे योनिवन्द्ययोः ।
केदारदारागारेषु नक्षत्रे पुरि राशिषु ॥१६८२॥
क्षेत्रज्ञ आत्मन्यथ स दक्षक्षेत्रविदोस्त्रिषु ।
क्षेत्रिको ना तुरुष्काख्यनिर्यासे क्षेत्रिणि त्रिषु ॥१६८३॥
क्षेत्रिया क्षुद्रधान्ये स्याद् गवीधुरिति विश्रुते ।
त्रिस्त्वथ दुष्प्रतीकारव्याधादौ धान्यवप्रजे ॥१६८४॥
निराकार्यतृणे पारदारिके यत्पुनर्विषम् ।
देहान्तरे सङ्क्रमय्य चिकित्स्यं तत्र चोच्यते ॥१६८५॥
क्षेम्यं त्रि क्षत्रसाधौ स्याल्लवणे क्ष्यूषरोद्भवे ।
क्षेपो विलम्बावहेलानिन्दाप्रेरणलेपने ॥१६८६॥

क्षेपणी जालभिन्नौकादण्डयो प्रेरण तु नप ।
पादाङ्गुष्ठाङ्गुलीमध्ये क्षपणम्पुन्नपुसकम् ॥१६८७॥
क्षेपणीया भिण्डिपाले ना क्षेमन्ये त्वय त्रिषु ।
क्षेमश्चण्डौषधौ क्षेमा चण्ड्या क्षेम त्रि निर्भये ॥१६ ८॥
अस्त्री क्षेम शुभे मुक्तौ तथा प्राप्तस्य रक्षणे ।
क्षोणी तु मेखलाया स्त्री माञ्च्या भुवि च कीर्त्तिता ॥१६ ९॥
द्यावापृथ योस्तु क्षोणी इति द्वित्वे प्रयुज्यते ।
क्षोदो जले चूणने च रजस्यपि पुमामत ॥१६९ ॥
क्षोभ्यन्नपुसके वज्रे क्षोभणीये तु भेद्यवत् ।
क्षौद्रम्मधुनि पानीये क्षुद्रयागिनि तु त्रिषु ॥१६९१॥
क्षाममस्त्री दुकूलेऽट्टे क्षाम तु स्यान्नपुसकम् ।
अतसीजे च शणजे तथा व कलजऽशुके ॥१६९ ॥
क्ष्माशब्दो भुवि नद्या च स्त्रीलिङ्ग परिकीर्त्तित ।
क्ष्वेड कर्णामये राजकोशातक्या ध्वनौ विष ॥१६९३॥
क्ष्वेड रक्तार्कपणस्य फले घोषसुमेऽप्यथ ।
दुरासदे च कुटिले क्ष्वेड स्यादभिधेयवत् ॥१६९४॥
क्ष्वेडा वशशलाकाया योधसिंहध्वनावपि ॥१६९४इ ॥

## ख

खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि ।
सवेदने देवलोके नक्षत्रे छिद्रगेहयो ॥१६९५॥
अभ्रके ब्रह्मणि क्ली स्या खा तु कूपे भवेत् स्त्रियाम् ।
खकणीनी तु दुर्गाया चिह्नपक्षिस्त्रियामपि ॥१६९६॥
खग पुसि रवौ वायौ ग्रहे देवे शरे रणे ।
चातके पक्षिमात्रे च द्वे त्रिर्व्योमादिगामिनि ॥१६९ ॥
खगवक्त्रस्तु लकुचे खगाऽस्ये तु यथायथम् ।
खगासनस्तु विष्णौ च तथा स्यादुदयाचले ॥१६९८॥

खगेन्द्रो गरुडे गृध्रे तथा राजान्तरे मत ।
खचरो ना रवौ मेघे वायौ स्याद्द्रूपका तरे ॥१६९९॥
द्वे तु विद्याधरे रक्ष पक्षिणोर्वेसरेऽपि च ।
खचित तु मणौ लोहविद्धे स्यादभिधेयवत् ॥१ ॥
तथा स्यादुद्धृतस्नेहे घृतहीने च दध्नि नप ।
खजस्तु मन्थने क्षोभे दर्वीमन्थानयो पुन ॥१ १॥
खजस्तु पुसि म थाने त्रिषु व्योमादि खाऽथजे ।
खजक स्यादुघृते चापि मन्थानेऽपि पुमानयम् ॥१ २॥
खजक खजिका चेति द्वयोस्स्याद्रसपाचके ।
खजा द्वे मरणे तु स्त्री करे च प्रसृताङ्गुलौ ॥१ ३॥
खजाको ना मन्थदण्डे द्वे खगे क्ली विहायसि ।
शरीरे च खजाका तु स्त्री दव्यामसतीस्त्रियाम् ॥१ ४॥
खञ्जा छन्द प्रभेदे स्त्री खञ्ज खञ्जी च विप्रत ।
अपत्येऽन्तावसायिन्या खोडे त्रि लशुने तु ना ॥१ ५॥
खञ्जनम्पङ्गुगमने खञ्जरीटे पुनद्वयो ।
खञ्जनी खञ्जरीटे द्व स्त्री सपप्याङ्गतौ तु नप ॥१ ६॥
खञ्जरीटी गतिभिदि स्त्री द्वे खञ्जनपक्षिणि ।
खटोऽन्धकूपकफयो प्रहारान्तरटङ्कयो ॥१ ॥
हले छदिस्तृणे चापि स्यात्सुगन्धितृणान्तरे ।
खटको घटके स्त्री तु कठिन्यां खटिका मता ॥१७ ८॥
तृणभित्कर्णशष्कुल्यो खटिकाऽ(र्ध)मुद्रिते करे ।
करे मुद्राविशेषे च द्वयो स्या कगनिमिते ॥१७ ९॥
खटखादक एष द्वे काकजम्बुकज तुषु ।
काचपात्रे पुमानेष घस्मरे तु मतस्त्रिषु ॥१ १ ॥
खटी तु खटिकाधातौ स्त्रियामेव प्रकीर्त्तिता ।
खट्टिक सैनिके द्वे ना महिषी क्षीरफेनके ॥१७११॥
खटवा पर्यङ्क आचार्यासने दोलौषधीभिदो ।
आयुर्वेदप्रसिद्धे च व्रणबन्धनयन्त्रके ॥१ १२॥

---

१ खजकी वा ।

खटवाङ्गोऽस्त्री वृक्षभेदे पृष्ठास्थनि चिते धने।
दिलीपनृपतौ पुंसि खटवाङ्गी तु लतान्तरे ॥१ १३॥
खडस्तु खण्डने तक्रशाकेऽथाऽस्त्री तृणान्तरे।
खडक वगले क्लीब कठिया खडिका मता ॥१ १४॥
स्त्रियां तु कठिनीधातौ खडीति परिकीर्त्तिता।
खड्गस्त्री मृतखटवायां तथा स्याद्भूषणान्तरे ॥१७१५॥
खड्गो गण्ड कभृङ्गासिबुद्धभदशरेषु ना।
द्वे गण्डकमृगे यादोभेदे च मकराभिधे ॥१ १६॥
खड्गकोश पिधानेऽसे खड्गाधारोऽपि कथ्यते।
खड्गधेनु स्त्रियामुक्ता छुरिका गण्डकस्त्रियो ॥१७१ ॥
खड्गारीटस्तु फलकाऽसिधाराव्रतधारिणो।
खड्गारीट खड्गफले तथा स्या खड्गनर्त्तके ॥१ १८॥
खड्गिको माहषीक्षीरफेनासिधरसैनिके।
खड्गी द्वे गण्डके मञ्जुघोषऽथाऽसिधरे त्रिषु ॥१७१९॥
खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयो।
खादुपानान्तरे भेदे क्लीब तु लवणेऽधिजे ॥१ २ ॥
खण्ड तु खण्डिते भेद्यलिङ्गमेतत्प्रकीर्त्तितम्।
अर्धे गुडविकारे च कश्चित्स्वादुद्रवेऽभ्यधात् १ २१॥
खण्डको लास्यभदे ना नखहीननरे द्वयो।
खण्डधारा नृत्यभेदे कर्त्तर्यञ्च प्रकीर्त्तिता ॥१७२२॥
खण्डना क यकार्यां स्त्री स्फुटवैधव्यलक्ष्मणि।
शास्त्रोक्तेरविराद्ध्यायामपुम् खण्डयते कृतौ ॥१ २३॥
विसर्गे वञ्चने राजद्रोहादावपि सा मता।
ना खण्डपरशु खण्डे परशौ च महेश्वरे ॥१७२४॥
खण्डपर्शु पर्शुरामे शङ्करे चूर्णलेपिनि।
खण्डामलकराह्वोश्च भग्नद तगजे च ना ॥१७२५॥
अस्त्री तु खण्डलं खण्डे चीरवस्त्रे च कीर्त्तितम्।
खण्डाभ्रमभ्रलेशे स्यात्तथा द तक्षतान्तरे ॥१७२६॥

खण्डिकस्तु हरेण्वाख्ये कलायाख्ये च धान्यके।
भुजकक्षे गुडकृतिखण्डाख्येतर्यपीष्यते ॥१ २ ॥
खण्डिका काष्ठखण्डे स्त्री कण्डिकायामपीष्यते।
खण्डिता तु स्त्रिया प्रावृड्रात्रौ शकलिते पुन ॥१ २८॥
वा यलिङ्गो विरहिते तस्य वाक्ये च खण्डित ।
खण्डी खण्डवति त्रि स्याद्वनमुद्गे तु पुस्ययम् ॥१७२९॥
तथा खण्डनकारे श्रीहर्षे भूमौ तु खण्डिनी।
खनमालो भवे पुसि धूमे चापि बलाहके ॥१ ३ ॥
खदतिर्भक्षण स्थैर्ये हिंसायां च प्रकीर्त्तित ।
खदिरस्त्वृषिभदे च गायत्रीतरुशक्रयो ॥१७३१॥
द्वे तु वृश्चिकभेदेऽय दश्चिकि स्यनिषे मत ।
स्त्रिया खदिरका लाक्षा गिरिभेदे पुमानयम् ॥१ ३२॥
खदिरी स्त्री नमस्कारीसञ्ज्ञ व ल्यन्तरेऽपके।
खदिरी शाकभदे स्त्री ना च द्रे दन्तधावने ॥१ ३३॥
शमीफला समाख्ये च जलशाकलता तरे।
खद्योतोऽर्केऽग्निकीटे तु खद्योताऽक्ष्ण्यदक्षिणे ॥१ ३४॥
खनको मूषिके द्वे स्या मर्त्यजात्य तरे तथा।
राज्ञीमागधसम्भूते त्रि तु स्यादवदारके ॥१७३५॥
भूमिसचितवित्तज्ञे सन्धिचौरे तथैव च ।
खनि खनति धातौ ना स्त्री गर्त्ते चाऽऽकरे निधौ ॥१ ३६॥
क्लीब खनित्र कुद्दाले खनित्री तु तपस्विनाम्।
स्त्रियां विशाखिकासञ्ज्ञ दण्डभेदे प्रकीर्त्तिता ॥१ ३७॥
खपरस्तस्करे धूर्त्ते भिक्षाभाण्डकपालयो ।
खपुरो ना पूगवृक्षे पूगपट्टे घटे तरो ॥१७३८॥
निर्यासे भद्रमुस्तेऽथ बालाख्ये ग धवस्तुनि।
पुनपुमकयोरेत क्ली तु पूगफले स्मृतम् ॥१७३९॥
खर शराख्यस्तम्बे ना ककुभाह्वयपादपे।
रक्षोभेदे दशास्यस्य प्रवीरे दण्डनायके ॥१ ४ ॥

१ खदिरा वा।

हविर्धानारयदेशस्य पुरस्ताद्दक्षिणस्य या ।
वितर्दिर्यज्ञभूमिष्ठा तस्यामुष्णगुणऽपि च ॥१७४१॥
कठिनत्वे च काकश्ये रसभेदे च मिश्रणात् ।
जाते रसाना तिक्ताम्लकषायलवणात्मनाम् ॥१७४२॥
त्रिस्त्वेषामुष्णतादीना गुणाना द्रव्य आश्रये ।
एकैकस्य रसान्तानाञ्चतुर्णामपि म वते ॥१७८३॥
बाहस्पत्ये पञ्चविंशे वर्षे स्याद्रासभे द्वयो ।
वेसरे कुररे देत्ये बके काके खर खरी ॥ ७८८॥
शुष्कपूगफले तु क्ली देवताडे स्त्रिया खरा ।
खरकुट्यपि शालाया वपनस्यापि यौगिके ॥१७४५॥
भवेत् खरगृह रासभागारपटवेश्मनो ।
खर छ्दो यौगिके त्रिर्नोर्ध्वमूलाह्वये तृणे ॥१७४६॥
खरच्छदो भूमिसहे कुन्दरेऽपि कटे पुमान् ।
स्त्रिया तु क्षुद्रघोल्यारयलताया स्यात् खरच्छदा ॥१७४७॥
द्वित्वे रक्षोभिदोरैक्ये धत्तरे खरदूषण ।
खरपत्रो मरुवके वेणुभेदे कुशान्तरे ॥१ ८८॥
खरपत्रा तुलस्याञ्च शाखोटे शाकपादपे ।
क्लीब खरमुख भृङ्गवाद्ये त्रिषु तु यौगिके॥१ ४९॥
खराङ्गस्तु द्वयोर्भेके ककशाङ्गे तु भेद्यवत् ।
ग्रामणीभण्डिनाराचेऽप्युपधाने खरालिक ॥१ ५ ॥
खरुर्हये स्मरे दर्पे नीतिभेदे रदे हरे ।
द्वयोर्मनुष्ये दसे तु श्वेते मूर्खे खरे त्रिषु ॥१७५१॥
कार्मुकेऽपि खरुस्तु स्त्री कयायां या पतिंवरा ।
खर्जति र्यथने चैव पूजने मार्जनेऽपि च ॥१ ५२॥
खजनी यज्वना कृष्णविषाणायां स्त्रियां मता ।
खर्जनन्तु नपि ज्ञेय क्रियायां खर्जतेरिदम् ॥१७५३॥
खजु कण्डवाञ्च खर्जूरीद्रुमे कीटान्तरे स्त्रियाम् ।
खर्जुर रजते क्लीब खर्जूरद्रौ तु खर्जुर ॥१७५४॥

खर्जूर्विंद्युति कण्डवां च स्त्रियामेषा प्रकीर्त्तिता ।
खर्जूर्नोऽक्रद्रुमे चक्रमर्द्धत्तरयोरपि ॥१ ५५॥
खर्जूरो ना परूषद्रौ खर्जूर्यस्याल्पभेदके ।
क्ली तु तत्प्रसवे चापि रजते हरितालके ॥१ ५६।
खर्जूरन्नारिकेलास्थिगर्भसारेऽपि कीर्त्तितम ।
द्वयोस्तु वृश्चिके प्रोक्तो मेद्यवत्तु खले मत ॥१ ५ ॥
खपरस्तु कपालाशे कपाले धूर्त्तचौरयो ।
भिक्षापात्रे तथा छत्रे धातुभेदे तु खपरी ॥१ ५८॥
खबर स्यात्कपालेऽपि भिक्षापात्रे करे पुमान् ।
खर्म तु पौरुष क्लीव तथा स्यात्कोषजाशुके ॥१ ५९॥
खर्व सरया तरे नप् ना निधौ त्रि लघुनीचयो ।
खर्विका पूणक पे दुपूर्णिमायाम्परे त्रिषु ॥१ ६ ॥
खलम्भूस्थानयोस्तक्रविशेषे क्वथिते च नप् ।
निष्पीडितरसे कल्के पिण्याकादावथ त्रिषु ॥१७६१॥
नीचे क्रूरे दुजने च पुश्चल्या तु स्त्रिया खला ।
फलग्रहणदेश तु क्षेत्रस्यास्त्री रणे तु ना ॥१ ६२॥
धत्तरेऽपि तमालेऽपि तयोस्तु प्रसवे नपि ।
कुलत्थ ना खलकुल खलस्य तु कुले नपि ॥१ ६३॥
खलतिस्त्रिषु ख वाटे ख लिटे चै द्रलिम्रिके ।
सूर्ये खलतिकश्चाद्रिभेदे त्रिषु तु च द्रिले ॥१७६४॥
खलिघनद्रवे द्र यभेदे च जलपाचिते ।
स्त्रियां खलीवत् पिण्याके तथोक्त पिष्टतण्डुले ॥१७६५॥
खलिनी खलवृन्दे स्यात्तालपर्ण्यामपि स्त्रियाम् ।
खलीनोऽस्त्री तुरङ्गाणा मुखसयमने तथा ॥१ ६६॥
छिद्राकाशादिलीने तु खलीन वाच्यवन्मतम् ।
खलु वाक्यविभूषाया जिज्ञासायाञ्च सान्त्वने ॥१७६ ॥
वीप्सामाननिषेधेषु पूरणे पदवाक्ययो ।
खल्या तु खलवृन्दे स्त्री खलाय तु हिते त्रिषु ॥१७६८॥

खलश्चर्मादिभस्त्रा स्यात्तथैवाषधिपेषणी ।
वस्त्रान्तरे चर्मचर्मपात्रगर्त्तेऽथ चातके ॥१६९॥
द्वयोः खलोऽथ खली स्त्री रुग्भदे परिकीर्त्तिता ।
खल्लिका स्त्री मजीषं स्यात्खल्वाटे खल्लकस्त्रिषु ॥१७०॥
खल्ली वस्त्रप्रभेदे स्याद्गर्त्ते चर्मणि चातके ।
खली तु हस्तपादावमर्दनाख्यरुजि स्त्रियाम् ॥१७१॥
खल्वो भेषजपेषण्यां धान्यभेदे तथा पुमान् ।
खशयस्तु द्वयोर्भेके त्रिस्तु खे शयितर्यसौ ॥१७२॥
खष खषी व्रात्यसुतशूद्रौढक्षत्रियाभवे ।
डोम्ब्यां चाण्डालतश्चापि जाते द्वे सकरान्तरे ॥१७३॥
खष्प कोपे बलात्कारे ना दुर्मेधसि तु त्रिषु ।
खसस्तु खर्ज्वाम्पुम्भूम्नि तु नृजात्यन्तरे खसा ॥१७४॥
तेषां जनपदेऽथ स्त्री गन्धद्रव्यान्तरे खसा ।
अथ खस्फटिकं सूर्यकान्तचन्द्राश्मनोर्मतं ॥१७५॥
खाटिस्त्वसदवग्रहेऽपि स्यात्किणे शवरथे स्त्रियाम् ।
खाण्डवं पिप्पलीशुण्ठी मुद्गयूषे रसे तथा ॥१७६॥
मधुराम्लकयोगोत्थ कुरुक्षेत्रवनान्तरे ।
मधुराम्लकयोगोत्थरसभाजि तु वाच्यवत् ॥१७७॥
खाण्डिकः स्याद्गुडवणिग्यपि छात्रे तथा पुमान् ।
खाण्डिकं तु समूहे स्यात्खण्डिकानां नपुंसकम् ॥१७७८॥
खातं क्ली खनने पुष्करिण्यां त्रिस्त्ववदारिते ।
क्वचित्खाता तडागेऽपि स्त्रियामेषा प्रयुज्यते ॥१७९॥
खातकः खातिकश्चिति परिखायां न ना भवेत् ।
खात्रश्चोरकृते रन्ध्रे सरः कुद्दालतन्तुषु ॥१८०॥
महाभयेऽप्यरण्येऽपि नपुंसकमुदाहृतम् ।
खादस्तु भक्षणे भोज्येऽथोत्तरस्थस्त्रिभक्षके ॥१८१॥
खादको भक्षकेऽपि स्यादधमर्णे तथा त्रिषु ।
खादनस्तु पुमान्दन्ते क्लीबं भक्षणभोज्ययोः ॥१७८२॥

खाद्यस्तु खदिरे पुंसि भक्षणीय तु वाच्यवत ।
खान क्वचिद्भक्षण स्यात्तुरुष्कनृपतौ तु ना ।।१ ८३।।
खानकस्तु पुमाश्चौरे परिखाया तु खानिका ।
खारिकस्तु त्रिषु क्रीते खार्या क्ली तु फला तरे ।।१७८४।।
खारिका तु स्त्रिया खारीपरिमाण प्रकीर्त्तिता ।
खिङ्खारस्तु द्वयो क्रोष्टौ ना खटवाङ्गे किखीरके ।।१७८५।।
खिङ्खिरो ना वारिवाहे खटवाङ्ग च द्वयो पुन ।
शिम्बाभदे खिङ्खिरा तु बलभृत्ये च खिङ्खिर ।।१ ८६।।
खिदिरस्तापसे दीने त्रिर्भये ने द्रच द्रयो ।
खिद्र शशाङ्क खिद्र तु भवेद्विम्नोपतापसो ।।१ ८ ।।
खिद्रस्तु दीने याधौ च खिद्र स्याद्भदय त्रके ।
खिलोऽस्त्र्यप्रहते स्थाने परिशिष्ट खिलम्मतम् ।।१७८८।।
पुरणीयावकाशेऽपि दरूहगणितेऽप च ।
दुराग्रहे वेधसि च वाच्यवत्त सदोषके ।।१ ८९।।
खिल्य पुञ्जे खिलक्षेत्राश्मनोस्त्रिस्तु खिलोद्भवे ।
खुण्डको ना ह्रस्वनालिकेरे ह्रस्वा पयोस्त्रिषु ।।१ ९ ।।
खुर शफे शुक्तिसञ्ज्ञभेषजेऽपि पुमा मत ।
खटवाङ्गाऽवयवे बह्वादिपाठाद्विष्यते खुरी ।।१ ९१।।
खुरको वङ्गभेदेऽपि नृत्यभेदे तिलेऽपि च ।
खुरप्रस्तु क्षुरप्रेऽपि बाणभेदे प्रकीर्त्तित ।।१ ९२।।
खुल्लस्त्रि क्षुल्लव क्षुद्रे ना तु स्या छुक्तिभेषजे ।
खेचरो द्वे दुश्चिकि सनिषे स्याद्वृश्चिका तरे ।।१ ९३।।
विद्याधरे च त्रिषु तु वियच्चरसपक्षयो ।
राक्षसे खेचर प्रोक्तो ग्रहपारदयोस्तु ना ।।१ ९४।।
तथैव नवसख्यायां खेचरा मूर्च्छना तरे ।
खेचरी सिद्धिभेदेऽङ्गुलिमुद्रादुर्गयोरपि ।।१ ९५।।
तथैव कणवलये स्यात्त थार्थे तु खेचरम ।
खेटोऽस्त्र्य पपुरे चर्मण्यद्रिनद्यन्तरस्थिते ।।१ ९६।।

शयसाधौ पाणिभवे मन्दिरे तु नपुंसकम् ।
शर पुंसि शरद्वायौ क्षीरादेमुखबन्धने ॥५८६२॥
इन्द्रसङ्गतृणस्तम्बे हिंसामार्गणयोरपि ।
अथ ह्रीबेरजलयो शरमुक्त नपुंसकम् ॥५८६३॥
शरठ वायुधे चापे क्रीडाशीले तु भेद्यवत् ।
शरद् संवत्सरे मघाऽयय चापि स्त्रियां मता ॥५८६४॥
शरभ सिंहशत्रौ स्यादष्टपात्संज्ञके मृगे ।
द्वयोर्मृगान्तरे चापि करभ च प्रकीर्त्तित ॥५८६५॥
अविवाह्यविशीर्णाङ्गक याया शरभा स्त्रियाम् ।
शरवारि शरास्ये ना पातक्यशरजीवयो ॥५८६६॥
शरु स्यादायुधे क्रोधे द्वयोस्तु स्यात्कपिञ्जले ।
शर्करा च सितायां च रोगभेदे शिलान्तरे ॥५८६ ॥
शर्करावप्रदेशे च शकलेऽल्पकपालके ।
गुडे च खण्डे विकृतौ स्त्रीलिङ्गे परिकीर्त्तिता ॥५८६८॥
शर्म गेहे सुखेऽप्युक्त नकारान्त नपुंसकम् ।
शव शिवे ना शर्वाणी स्यान्मृडान्या स्त्रियामियम् ॥५८६९॥
शर्वर तमसि क्लीब शवर शिवच द्वयो ।
शवरी तु स्त्रिया रात्रौ स ध्यायामपि कीर्त्तिता ॥५८ ॥
शल तु शलले क्लीब तल्लोम्नि परिकीर्त्तिम् ।
शलस्तु गन्तरि त्रि स्याद्वृद्वयोरुष्ट्रे च गद्भे ॥५८७१॥
शलली नप्स्त्रियो श्वाविल्लोम्नि श्वाविधि तु द्वयो ।
शलाका तु भवेत्सूच्या द्यतोपकरणऽपि च ॥५८ २॥
अस्थूलदीर्घकाष्ठादिमये वस्तुनि च स्त्रियाम् ।
शल्क तु शकले चात्तरसेऽपि शकले मतम् ॥५८७३॥
वल्कले मुद्गरे चाथ त्रिषु भीतौ च पातरि ।
शल्यमस्त्री शलाकाया शङ्कुसंज्ञायुधान्तरे ॥५८ ४॥
विद्ध्वा शरीर लीनेऽन्त काण्डेऽथ मदनद्रुमे ।
मद्रराजान्तरे चाथ श्वाविटसंज्ञमृगे द्वयो ॥५८ ५॥

शल्यकस्तु पुमाञ्श्वेतखदिरे कदराह्वये ।
शल्यकी तु द्वयोरेषा मृगभेदे प्रकीर्त्तिता ॥५ ६॥
शवस्तु कुणपे न स्त्री जले तु क्ली गतौ तु ना ।
शशो बोलौषधे द्व तु रोगकर्णमृगे मत ॥१८ ॥
शश्शरीकस्तु पुष्पारये द्वयोर्लावारयपक्षिणि ।
क्रिमौ च मेधलिङ्गस्तु विकलेन्द्रियज तुषु ॥५८ ८॥
शष्कु यपूपभदेऽपि स्यात्कर्णावयवा तरे ।
शष्प बालतृणे रूपे रोमभेदे च न स्त्रियाम् ॥१८७९॥
शस्ता मित्रावरुणयोर्ना ब्रह्मणि पितयपि ।
चण्डाले तु द्वयो शस्ता त्रिषु स्तोतरि कीर्त्तित ॥५८८ ॥
शस्त्री तु छुरिकाया स्त्री शस्त्र तु क्लीबमायुधे ।
अयस्पृड म त्रभेदेषु शसाया साधनेषु च ॥५८८१॥
शस्त्रकष्टङ्कणक्षारे शस्त्रक त्वयसि स्मृतम् ।
शाको हरितके पत्रपुष्पादिदशके तरो ॥५८८२॥
मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ।
त्वक्पुष्प कवकं चेति शाक दशविध स्मृतम् ॥५८८३॥
इत्युक्ते नस्त्रिया ना तु पृथुच्छदतरौ मत ।
शक्तौ सहाये सुहृदि साधनेऽपि शकेर्घञि ॥१८८४॥
भारताऽन तरे द्वीपभेदेऽपि शकटेऽपि च ।
शिरीषेऽप्यथ शाका तु हरीतक्यां प्रकीर्त्तिता ॥५८८५॥
शाकी तु स्त्री महाशाके नानाशाकसमाहृतौ ।
शाककोष्ठा तु जीव तीडोडीसञ्ज्ञकशाकयो ॥५८८६॥
शाकम्भरी तु दुर्गायां लवणह्रदभिधाप ।
शाकारय शाकवृक्षे ना शाके तु स्यान्नपुसकम् ॥५८८ ॥
अथ शाकट इत्येष पुमा पलशतात्मन ।
तुलासञ्ज्ञस्य मानस्य विंशत्यात्मकभारके ॥५८८८॥
शाकटी ना पराभिरये यत्त मान व्यवस्थितम् ।
उक्तात्तु यद्दशगुण ततो दशगुण च यत् ॥५८८९॥

तस्मा च यद्दशगुण तस्मिन् क्ली भेद्यवत्पुन ।
शकटे शकटस्यापि सम्बन्धिनि च वाहके ॥५८९ ॥
शकटस्याथ शाकव्यर्थे निदानकृतोदिते ।
शाकटीनस्तुलानां स्याद्विंशया मकमानके ॥५८९१॥
शकटस्य तु सम्बन्धि यय वाच्यवदिष्यते ।
शाकल शकलाख्येन रक्ते द्रव्येण वाच्यवत् ॥५८९२॥
शाकलानां च शकलस्यापि सम्बन्धिनि स्मृतम् ।
अस्त्रियां शकले पुंसि काष्ठखण्डकृताङ्गदे ॥५८९३॥
ऋषिभेदे सपभेदे शाकल तु पुरान्तरे ।
मद्राणां सामभेदेऽपि शाकल्यश्रुतियागयो ॥५८९४॥
बाह्लीकग्रामभेदेऽपि नपुंसकमुदीरितम ।
शाकी त्रिषु सहायेऽथ शाकिनी डाकिनीभिदि ॥५८९५॥
तथैव शाकक्षेत्रेऽपि क्लीब एव प्रकीर्त्तिता ।
शाकुन स्याच्छाकुनिके निमित्तेऽप्यथ वाच्यवत् ॥५८९६॥
शकुने शकुनस्यापि सम्बन्धिनि तथा मत ।
परोत्तापि यपि भवेत्पश्चात्तापिनि कस्यचित् ॥५८९ ॥
वैतसिक शाकुनिको निमित्तज्ञे तथा त्रिषु ।
केषाञ्चिन्मत्स्यबन्धेऽपि तथा शकुनयोगिनि ॥५८९८॥
शाकुनी मत्स्यबन्धे त्रि पुमा स्यादसुरान्तरे ।
शाकुनेयो लघूलूके द्वे त्रि शकुनियोगिनि ॥५८९९॥
पुल्लिङ्ग शाकुनेयोऽय वृकनाम्न्यसुरे मत ।
शाकुन्तलो ना भरते क्लीब स्यान्नाटकान्तरे ॥५९ ॥
द्वयो शाकुलिको मत्स्यबन्धे त्रिर्मत्स्यसहतौ ।
शाक्करो वृषभे सोमविशेषेऽप्यथ वाच्यवत् ॥५९ १॥
शक्करीयोगिनि क्ली तु यागसामभिदोभवेत ।
शाक्त सामान्तरे क्ली त्रिस्तान्त्रिके ना पराशरे ॥५९ २॥
शाक्तिकस्त्रि शक्तिजीवि यपि स्यात्तान्त्रिकान्तरे ।
शाक्त्य सामान्तरे ना तु गौरवीति ऋषौ भवेत् ॥५९ ३॥

शाक्यो गौतमबुद्ध ना त्रि शकाभिजनादिके ।
शाक्री स्त्रियां स्याद् दुर्गायां शाक्र येष्टक्ष इष्यते ॥५९ ४॥
शाखा तरोलतायां च देहाङ्ग्यङ्गुलिबाहुषु ।
गृहपार्श्वे द्वारपार्श्वस्तम्भ भागप्रभागयो ॥५९ ५॥
पक्षान्तरेऽन्तिके वर्गे वेदव्यक्तिषु च स्त्रियाम ।
शाखस्तु स्कन्ददेवस्य पृष्ठजे स्यात्सुरान्तरे ॥५९ ६॥
करञ्जेऽपि च पुल्लिङ्ग शाखा व्याप्तौ द्वयोर्मता ।
शाखामृगो वानरे द्व केषांचिच्चिक्षुरेऽपि च ॥५९ ॥
शाखाशिफा वरोह स्यान्मूलाञ्चाग्रज्ञता लता ।
शाखी तु वृक्षसामान्ये शाखिनस्तु नृभूमनि ॥५९ ८॥
तुरुष्केऽथ शाखी तु स्याच्छाखावति ना यवत् ।
शाख्यस्तु शाखासदृशे शाखायोगिनि च त्रिषु ॥५९ ९॥
शाङ्कर शङ्करस्य स्यात्सम्बन्धि यप वान्यवत् ।
शाङ्करी तु समाम्नाये वर्णानां शिवसम्मते ॥५९१ ॥
क्लीब शाङ्करमार्द्राभे पुमाञ्छाकरवृद्दषे ।
शाङ्करिस्तु गणेशेऽपि कार्त्तिकेये तथा पुमान् ॥५९११॥
शाङ्खस्त्रि शङ्खसम्बन्धि यथ शङ्खस्वने तु नप ।
शाङ्खिकस्त्रि शङ्खयोगिन्यपि शङ्खध्मि कीर्त्तित ॥५९१२॥
द्वयोस्तु शङ्खककमिजातौ शङ्खारिनामनि ।
शाडवो रागभेदेऽम्लमधुरेऽथ त्रि तद्वति ॥५९१३॥
शाणो ना निकषे द्वे तु शाण शाणा चतुष्टये ।
माषाणामथ दाने स्त्री शाणी गोण्यामपीष्यते ॥५९१४॥
शणसम्बन्धिनि त्वेषा शाणी स्याज्जैनचीवरे ।
तथा जवनिकाभेदे सज्ञायां त्रिस्तु यौगिके ॥५९१५॥
शाण्डिल्यस्त्वृषिभेदे ना स्याद्बिल्वे पावकान्तरे ।
शाण्डिल्यस्य त्वपत्ये द्वे गोत्रे स्त्री तत्र शाण्डिली ॥५९१६॥
शाण्डिल शाण्डिल्यजाते शाण्डिलीत्यग्निमातरि ।
शातस्तीक्ष्णे कृशे चापि शतयोगिनि वान्यवत् ॥५९१ ॥

क्ली धत्तरसुखयो पुसि अशक्षयादिषु ।
शातकुम्भ सुवर्णे क्ली तत्सम्बन्धिनि तु त्रिषु ॥५९१८॥
करवीरे तु धत्तरे ना क्लीब प्रसवेऽनयो ।
शातकौम्भ सुवर्णे क्ली स्यात्सौवर्णे तु वाच्यवत् ॥५९ ९॥
शातन तु भवेन्नाशे तेजनेऽपि नपुसकम् ।
शात्रव पुसि शत्रौ त्रि शत्रुयोगानि शात्रवम् ॥५९२ ॥
नपुसक तु शत्रूणा समूहे वैर एव च ।
शादस्तु शष्पे पङ्क च शदने स्वणबन्धयो ॥५९२१॥
अथ शातरि तद्व च शदसम्बन्धिनि त्रिषु ।
गृह्यकारस्य शादाभिरित्युक्तोश्च स्यतां गति ॥५९२२॥
इष्टकार्थे गोभिलस्य प्रयोग इति केचन ।
शाद्वल शातहरिते त्रिरस्त्रीघासवत्स्थले ॥५९२३॥
अथ शाडवलवत्प्रोक्त पुल्लिङ्गस्तु वृषे मत ।
शानस्तु पुसि शाते स्त्री शानी स्यात्ककटीभिदि ॥५९२४॥
शानपाद पारिपानेऽपि च दनकशाश्मनि ।
शान्त शमवति त्रि स्यान्निशातेऽवसिते शुभे ॥५९२५॥
क्ली तु शान्तौ पुमाञ्शान्त सुनिषण्ण रसान्तरे ।
शान्ता तु श्रुतिभेदे चाऽप्यामलक्यामपीष्यते ॥५९२६॥
दूर्वान्तरे रेणुकाख्यौषधे रामस्वसर्यपि ।
सप्तमार्हद्देवताया शक्तिभेदेऽपि कीर्तिता ॥५९२ ॥
वषभद पुनजम्बूद्वीपस्थे शान्तमिष्यते ।
भीष्मे शान्तनवस्तद्वत ाफटसूत्राणा प्रणेतरि ॥५९२८॥
द्वीपान्तरे पुन क्लीबमिद शान्तनव मतम् ।
शान्तनुर्धान्यभे शान्तनौ भीष्मपितर्यपि ॥५९२९॥
शान्ति शमे चिकित्साया धर्मपत्न्यां च मङ्गले ।
स्त्री ना दशमम न्वतरे द्रेऽपि तुषितान्तरे ॥५९३ ॥
अर्हद्भदेऽपि च तथा शान्तिनाथाऽभिधान्तरे ।
शाप शपथ आक्रोशे तरत्काष्ठादिके पुमान् ॥५९३१॥

शाबर वपराधेऽघ क्ली लोध्रे ना त्रियौगिके ।
जाल्मेऽपि शाबरी वात्मगुप्ताशबरभाषयो ॥५९३ ॥
शाबर ताम्रतमसोस्तथा शम्बरच दने ।
रोध्रे शाबरक शाबरिका स्याद्रक्तपा तरे ॥५९२३॥
शाब य शबलत्वे शाबल्या स्याद्ब धुलस्त्रियाम् ।
शाबस्ती पुरभेद शाबस्तस्तत्कत्त भूपता ॥५९३४॥
शा दी स्त्री वे सरस्वत्या शा दस्त्रिश दयोगिनि ।
शा दिकस्त्रि श दयोगि यपि श दावदि स्मृत ॥५९३५॥
शामनस्त्रि शा तिकृति शामनस्तु यमे पुमान् ।
शामित्र शमितुर्यागपशुकत्तनकारिण ॥५९३६॥
सम्बा धनि त्रिरग्नौ तु ना यागपशुवाचक ।
शामित्र क्ली वधस्थाने तथा शामित्रकर्मणि ॥५९३७॥
शामीलस्त्रि शमीयोग यथ क्ली भस्मनि स्मृतम् ।
अथ स्त्रियामिय मा ये शामीली परिकीत्तिता ॥५९३८॥
स्याच्छाम्बरी स्त्री मायायां त्रि तु शम्बरयोगनि ।
शाम्बर शम्बररणे तथा शबरच दने ॥५९३९॥
शाम्भवस्त्रि शम्भुयोगि यपत्ये स्याच्छिवस्य च ।
शिवभक्तेऽप्यथ पुमान् [कर्पूरविषभेदयो ] ॥५९४ ॥
स्त्री शाम्भवी स्याद्दुर्गाया शाम्भवा दवदारुणि ।
शाम्य शा तो मत क्लीबे शाम्यस्तद्योगिनि त्रिषु ॥५९४१॥
शायक कत्तरि त्रि स्याच्छयनस्याऽथ शायिका ।
शयनस्यैव पर्यायादौ स्त्रीत्वे परिकीत्तिता ॥५९४ ॥
शारो वायौ हिंसने च शबले त्रि तु तद्वति ।
शार शारी द्यूतशारावक्ली शारी पुन स्त्रियाम् ॥५९४३॥
शारिकाख्ये पक्षिभदे कुशेथ त्रि शरादणि ।
[अथ शारक इत्येष हिंसके वाच्यवन्मत ] ॥५९४४॥
शारदस्तु पुमा पीतमुद्गे सवत्सरेऽपि च ।
त्रिस्त्वधृष्टे च शुद्धे च शरत्पक्वादिकेषु च ॥५९४५॥

शारस्थ दातरि नवरोगे चाप्यप्रतिमेऽप्यथ ।
शारद शारदीति द्वे सप्तपणतरौ भवेत् ॥५९४६॥
शारदी तोयपिप्पल्यां कार्त्तिकाश्विनपूर्णयो ।
शारद तु शरच्छस्ये क्लीब श्वेतोत्पलेऽपि च ॥५९४ ॥
शारदा सारिवाब्राह्मीदुर्गावाग्देवतासु च ।
पुसि शारदको दूर्वाभेदे शारदिका स्त्रियाम ॥५९४८॥
शारिपुत्रे द्रोणपुत्रे शारद्वतीपुत्र इष्यते ।
शारि स्त्री शारिकासज्ञविहङ्गे नृस्त्रियो पुन ॥५९४९॥
पर्याणभेदे द्यूतस्य गुडे शारयतौ तु ना ।
[ति यप या तथा बाणे कपटे च स्त्रियामियम ] ॥५९५ ॥
शारिका पक्षिभेदे च वाद्यवादनदण्डके ।
द्यूतक्रीडाविशेषे च दुर्गायां तु स्त्रिया मता ॥५९५१॥
शारीर पुसि जीवात्म यथ त्रि काययोगिनि ।
शारीर कायघटनाऽऽयुर्वेदस्थानभेदयोः ॥५९५२॥
वृषऽपि पुसि शारीर विद्वास केचिदूचिरे ।
शारीरको ना जीवा म यथ त्रि काययोगिनि ॥५९५३॥
शारीरके इति द्वि वे स्यात्कायसुखदु खयो ।
शाकरो मधुमद्य माध्वीकार ये दुग्धफेनयो ॥५९९४॥
साम्नोस्तु योनौ वर्गो थयो क्ली शकरिले त्रिषु ।
शाङ्ग तु व गुचापेऽपि चापे भृङ्गकृतेऽप च ॥५९५५॥
केषुचित्सामभेदेषु यदुक्त तद्वदाद्रके ।
चापमात्रेऽपि च क्लीब वा यव छङ्गयोगिान ॥५९५६॥
तथा भृङ्गविकारेऽपि द्व तु पक्ष्य तरे स्मृत ।
शार्ङ्गेष्ठ चर्मपर्ण्यार यलताभेदे नपुसकम ॥५९५ ॥
शार्ङ्गेष्ठा तु स्त्रिया दासी षडश्राधार यकौषधे ।
शार्ङ्गी तु पुसि गोवि दे तथा शाङ्गवति त्रिषु ॥५९५८॥
शार्दूलो द्वे याघ्रसिंहशरभेष्वपि चूणके ।
पक्ष्यन्तरेऽप्युत्तरस्थ पुसि कोष्ठाथको मत ॥५९५९॥

नृभूम्नि शाखाभेदे ना छन्दोभिन्चित्रकौपजे ।
स्याच्छार्दूली तु याघ्रयादो तथाश्वापदमातरि ॥५९६० ॥
शार्वरोऽस्त्र्यन्धतमसे घातुके तु त्रिषु स्मृत ।
शालस्तु पुंसि प्राकारेऽश्वकर्ण लकुचेऽपि च ॥५९६१॥
स्यात्सातवाहने वृक्षसामान्ये द्व झषान्तर ।
शाला तु गेहे गेहैकदेशे च स्त्री तरोस्तथा ॥५९६२॥
स्कन्धसञ्जातशाखाया सूक्ष्मलाया त्रि गन्तरि ।
शालोऽस्त्यथर्चादिषु च वान्यनद्रन्तरि स्मृत ॥५९६३॥
अथ शाली स्त्रिया कृष्णजीरे पत्नीस्वसर्यपि ।
शालग्रामो ग्रामभेदे गण्डकीतीरसस्थिते ॥५९६४॥
शालवृक्षावृते विष्णौ शालग्रामशिलास्थिते ।
अस्त्री तु तद्ग्रामभवे पूजार्हे स्याच्छिलान्तरे ॥५९६५॥
शालग्रामी तु गण्डक्या स्त्रीत्व एव प्रकीर्तिता ।
शालङ्कायन इत्येष ऋषिभिन्प्रमथान्तरे ॥५९६६॥
शालपुष्प वदवकर्णपुष्प [क्लीव प्रकीर्त्तितम] ।
क्रीडान्तरे दारुपुत्र्या वेश्याया शालभञ्जिका ॥५९६ ॥
शालसारस्तु वृक्षेऽपि हिङ्गुन्यपि पुमान्मत ।
शालाकस्तु शलाकाना वृन्दे तत्पावकेऽपि च ॥५९६८॥
शालाकी शन्यवैद्येऽपि तथा स्यात्कुन्तधारिणि ।
शालाक्यस्त्वक्षिवैद्येऽथ क्लीव शल्यचिकित्सिते ॥५९६९॥
कुर्वादित्याच्छलाकाया अपत्ये तु भवेत्त्रिषु ।
शालाद्वार्यो याग्वह्न्यन्तरे त्रिर्गृहाग्रगे ॥५९ ॥
शालामुख गृहद्वारे शालिभेदे तु पुस्ययम ।
शालामुखीयो योगे त्रि शालाद्वार्योऽनले तु ना ॥५९ १॥
शालामृग कुक्कुरेऽपि केषाञ्चिज्जम्बुके द्वयो ।
शालार क्ली हस्तिनखे सोपाने पक्षिपञ्जरे ॥५९७२॥
नागदन्तेऽपि भित्तिस्थे शालार केचिदूचिरे ।
शालावृका कपिक्रोष्टुश्वबिडालादयो मता ॥५९ ३॥

शालिर्दशविधे पुंसि तण्डुले क्वापि च स्त्रियाम ।
खट्वाशे तु द्वयोर्यक्षान्तरे सिंहाकृतौ पुमान् ॥५९ ४॥
शालिकस्त्रिषु शालाजे शालायां शालिका मता ।
शालिकस्त्रि शालियोगि यस्य चूर्णे नपुंसकम ॥५९ ५॥
शाली फलाढ्ये च तथा शालिमत्येष वाच्यवत ।
तथा शालावात प्रोक्त शोभने तूत्तरस्थित ॥५९ ६॥
शालिनी तु स्त्रियामेषाछ दोभदे प्रकीर्त्तिता ।
शालिपिष्ट शालिचूर्णे क्लीब काचमणावपि ॥५९७ ॥
शालिवाह शालिवहमाने शा यूहि वा वृषे ।
शालिहान पुमानश्वायुर्वेदकृ मुनिभिद्यथ ॥५९ ८॥
शालिहोत्र तु शास्त्रेऽस्य नपुसकमुदीरितम् ।
शालीनो गृहसम्बन्धि यधृष्टक्लीबयोस्त्रिषु ॥५९ ९॥
पुमानाढ्यगृहस्थेऽथ शालीन विनये भवेत ।
शालुश्चोरारयगन्धे ना कषाये त्रिस्तु तद्वति ॥५९८ ॥
उदीच्यफलभदे तु पद्मक दऽपि न द्वयो ।
अथ स्त्रीपुंसयो शालुदर्दुरे परिकीर्त्तित ॥५९८१॥
शालूक कण्ठगड्डुके तथा जातिफलेऽपि नप् ।
अथ द्वयोस्तु शालूको दर्दुरे परिकीर्त्तित ॥५९८२॥
शालूरो दर्दुरे द्वे स्याच्छन्दोभेदे पुमान्मत ।
शालेय पुंसि मिश्रेयौषधे चाणक्यमूलके ॥५९८३॥
शालिक्षेत्रे तु शालेय शालेय पर्वतान्तरे ।
शाल्मलो द्वीपभेद स्यान्निर्यासे शाल्मलेरपि ॥५९८४॥
उत्तरस्थ शाल्मलिवत्तलवृक्षान्तरे मत ।
शाल्मलिस्तु द्वयोस्तूलद्रुभेदे द्वीपभिद्यपि ॥५९८५॥
यदावृतिघृताम्भोधिस्तथैव नरकान्तरे ।
स्त्रियां रूपद्वयं तस्य शाल्मलि शाल्मलीत्यपि ॥५९८६॥
शाल्मली स्त्री सरिद्भेद नारकीयाऽऽपगान्तरे ।
विष्णुशक्त्यन्तरेऽपीति विद्वास केचिदूचिरे ॥५९८ ॥

रोहिद्रुमे शाल्मलिक शाल्मलेश्च कनि स्मृत ।
शाल्मली गरुडे द्वे स्त्री शाल्मला शाल्मलिरपि ॥५९८८॥
शाल्मलिस्थस्तु गृध्रेऽपि गरुडेऽपि तथा द्वया ।
शाल्वो वृक्षान्तरे शाल्वा नृभूम्नि क्षत्रियान्तरे ॥५९८९॥
तेषां वासेऽपि विषये शाल्वस्तेषा नृपे मत ।
शावा तु स्त्री सरिद्भेदे शावक्षुप्रसवे तु नप् ॥५९९ ॥
शावोऽस्त्री मृतके पुंसि शिशौ त्रिमृतयोगिनि ।
नपुंसक तु मृतकाशौचे शावमुदीरितम ॥५९९१॥
शाश्वतो ना शिवे व्यासे वाच्यवत्तु सनातने ।
शाश्वत तु सदात्वेऽपि योम्नि स्त्री शाश्वती भुवि ॥५९९२॥
शष्कुलीयोगिनि त्रि शाष्कुलिक क्ली तच्चये ।
शासस्त्रि शासकेऽथाज्ञारूपिक्षुक्तान्तरपु ना ॥५९९३॥
शासको दण्डयितरि शिक्षके पालके त्रिषु ।
शासन शासके त्रि स्याच्छिक्षिकायां तु शासनी ॥५९९४॥
शासन दण्डने क्लीबमाज्ञायामपि पालने ।
आज्ञापत्रे लेखशास्त्रसन्देशात्मयमादिषु ॥५९९५॥
शास्ति स्त्री शासुधातौ च शासनार्थेषु कीर्तिता ।
शास्ता बुद्धे गुरौ भूपे जिने खड्गे तथा पुमान् ॥५९९६॥
शास्त्र तु क्लीबमाज्ञाया विद्यायां च नपुंसकम ।
शास्त्रचक्षुर्व्याकरण शास्त्रनेत्रे पुनस्त्रिषु ॥५९९ ॥
शास्त्रशिल्पी तु कश्मीरदेश भूम्नि तु त जने ।
शास्त्रार्थ शास्त्रवाच्ये स्याद्वादेऽपि विदुषाम्मत ॥५९९८॥
शास्त्री शास्त्रवति त्रि स्यात्पुंल्लिङ्गो बुद्ध इष्यते ।
शाह्वा कश्मीरभागेषु शाह्वो वैदेशिके नृपे ॥५९९९॥
शिर्ना शान्तौ शिवे भाग्येऽप्यादेशे जवशसोर्मत ।
शिक्य शिक्या तुलारज्जौ रज्जुपाशान्तरेऽपि च ॥६ ॥
शिक्षाऽभ्यासे चिकीर्षाया पाठे विनयदण्डयो ।
साहाय्येऽध्यापने वेदाङ्गभित्पाटलभूरुहो ॥६ १॥

१ शिंशुमारस्तु पुल्लिङ्ग उफस्तारामयाऽप्युते ।
शिंशुमारो द्वयोर्यादोन्तरे जलकपावपि ॥

पुमांस्तु शिक्षो गन्धर्वराजभेदे प्रकीर्त्तितः ।
शिक्षाकरोऽध्यापके त्रिरथ व्यासे पुमान् मतः ॥६ २॥
शिखण्डो बर्हिबर्हेऽपि चूडायां (वृक्षभिद्यपि) ।
शिखण्डी तु शिखायां स्त्री पुमांस्तु शिखिपुच्छके ॥६ ३॥
शिखण्डकः काकपक्षे चूडायां बर्हिबर्हके ।
तथा शैवविशेषाणां प्राप्तमोक्षे यतौ पुमान् ॥६ ४॥
नितम्बाधोभागयोस्तु क्ली द्वित्वे स्तः शिखण्डके ।
शिखण्डिकः कुक्कुटेऽपि मयूरेऽपि द्वयोर्मतः ॥६ ५॥
शिखण्डिका शिखायां स्त्री पद्मरागः शिखण्डिकम् ।
शिखण्डी तु द्वयोर्ज्ञेयो मयूरेऽपि च कुक्कुटे ॥६ ६॥
शिखण्डिनी तु यूथ्यांश्च गुञ्जायां चाप्सरोभिदि ।
नारायणे तथा बाणे कस्मिंश्चित्पर्वतान्तरे ॥६ ७॥
कलायसंज्ञे धान्ये च शिखण्डवति तु त्रिषु ।
शिखरोऽस्त्री गिरेः शृङ्गे वृक्षाग्रे पुलकेऽपि च ॥६ ८॥
पक्वदाडिमबीजाभमाणिक्यशकलेऽप्यथ ।
शिखरं शोभने चापि वर्त्तुले वान्यवन्मतम् ॥६ ९॥
शिखरं शोभने प्रोक्तमित्यसत्तदमूलकम् ।
मल्लिकाकुड्मले पाणिमुद्रामदास्त्रभेदयोः ॥६ १ ॥
शिखरा तु गदाभेदे मूर्वायां शिखरी पुनः ।
स्त्रीत्वे कर्कटशृङ्ग्यां स्याल्लवङ्गं शिखरं मतम् ॥६ ११॥
शिखरी पुंस्यपामार्गस्तम्भे चापि तरौ गिरौ ।
स्याद्वाच्यवत्तु तीक्ष्णाग्रे मल्लीकोरकसन्निभे ॥६ १२॥
अत्यष्टिवृत्तभेदे तु स्त्रियां शिखरिणी मता ।
मार्जितासंज्ञके तक्रभेदे चापि सुसंस्कृते ॥६ १३॥
नायिकोत्तमभिद्रोमावलीद्राक्षान्तरेष्वपि ।
शिखा मता शिफाशाखाघृणिज्वालासु मूर्धनि ॥६ १४॥
चूडायां केकिचूडायां चूचुकेऽप्यग्रमात्रके ।
प्रधानेऽपि तथा वृक्षस्याग्रे छन्दोन्तरे स्त्रियाम् ॥६ १५॥

ना तु सर्पान्तरे सर्पसत्रयाजि फणाभृताम् ।
शिखी स्त्रियामिन्द्रजालाद्यन्तरनदीभिदो ॥६ १६॥
शिखाकन्द तु लशुने पलाण्डावपि कीर्त्तितम् ।
शिखाधरो ना मञ्जुश्रीबुद्धे बर्हिणि तु द्वयो ॥६ १ ॥
शिखामणि शिरोरत्ने ना श्रेष्ठ तूत्तरस्थित ।
शिखामूल तु लशुने पलाण्डौ गृञ्जनेऽपि च ॥६ १८॥
शिखावान्दीपके केतावग्नौ स्याच्चित्रके पुमान् ।
त्रि सचूडेऽपि तीक्ष्णाग्रे स्त्रियां तु स्याच्छिखावती ॥६ १९॥
शिखावलो मयूरे द्वे तच्छिखाया शिखावला ।
शिखी नाग्न्यशुवृक्षेषु शरे केतुग्रहे द्विजे ॥६ २ ॥
दीपे गिरौ धूमकेतौ कपिकच्छ्वा सितावरे ।
भिक्षौ नामान्तरे शक्रे तामसान्तरसम्भवे ॥६ २१॥
द्वितीयबुद्ध बौद्धाना ब्रह्मण्यपि तथा मत ।
परिव्राजिवृषे वृक्षविशेषेऽश्मन्तकाह्वये ॥६ २॥
शिखावति त्वय त्रि स्याद्द्वे कुक्कुटमयूरयो ।
यति मुक्तशिखावत्सु त्रिर्द्वे चैव बकाश्वयो ॥६ २३॥
तथाग्निपर्यायतया त्रिसन्ध्यायामपीष्यते ।
शिक्रु शिक्येऽपि जालेऽपि स्त्रीत्व एव प्रकीत्तिता ॥६ २४॥
शिग्रुर्भोजनशाके स्त्री ना तु शोभाञ्जनद्रुमे ।
नृभूम्नि शिग्रवो मर्त्ये ज्ञातिभेदेऽपि वैदिके ॥६ २५॥
शिङ्गो वृक्षे किशोरेऽपि पुल्लिङ्ग परिकीर्त्तित ।
शिङ्घाण कोशवृद्धावप्यब्धिफेने तथा पुमान् ॥६ २६॥
शिङ्घाणा त्रिषु नासाया मले क्लीब त्वयोमले ।
काचपात्रेऽपि कूर्चेऽपि शिङ्घाण परिकीर्त्तितम ॥६ ॥
शिञ्जा धनुर्गुणे स्त्री स्यान्नूपुरादिध्वनावपि ।
शिञ्जित क्ली नूपुरादिध्वनौ तद्वति तु त्रिषु ॥६ २८॥
शिञ्जी शिञ्जावति त्रि स्याच्छिञ्जिनी स्त्री चतुर्गुणे ।
वृत्तचापेऽपि गणिते नूपुरेऽपि तथा मता ॥६ २९॥

शित त्रि तेजिते ना तु विश्वामित्रसुते शरे ।
क्लीब शिता मदोष्णि स्याद्योनौ यकृति मेदसि ॥६ ३ ।
शितिस्स्त्री तेजने ना तु वर्णयो शुक्लकृष्णयो ।
ऋजावप्यथ च त्रि स्यादुक्तवर्णयुते शिति ॥६ ३१॥
भूजवृक्षेऽपि सारेऽथ त्रिस्तद्वर्णयुते ऋजौ ।
शितिकण्ठ शिवे पुसि तथा नागान्तर मत ॥६ ३२॥
नीलकण्ठखगे तु द्वे तथा दात्यूहकेकिनो ।
चन्दने क्ली शितौ कस्तूर्यां च स्याच्छितिचन्दनम ॥६ ३३॥
शितिपृष्ठास्त्रयोगार्थे पुमान्नागपुरोहिते ।
शित्पुटो भ्रमरे च द्वे जन्तौ मार्जारसन्निभे ॥६ ३४॥
शिथिल त्वदृढे त्रि स्याच्छिथिली तु स्त्रियामियम ।
वम्रिकासदृश पिङ्गवर्णे कीटान्तर भवेत् ॥६ ३५॥
शिपिर्नभ्रश्मिशेफषु द्वे पशुप्राणिनो शिपि ।
शैत्याच्छयनयोगा च शिप वारि प्रचक्षते ॥६ ३६॥
शिपिविष्टस्तु खलतौ शिवे विष्णौ पुमान्मत ।
त्रिदुश्चर्मणि शेफाग्रचर्महीनेऽपि निर्धने ॥६ ३ ॥
शिप्रो हनौ स्याच्छिप्रा तु नासायां च नदीभिदि ।
शिप्रे कपोलौ शिप्रा तु शिरस्त्राणे प्रकीत्तितम ॥६ ३८॥
शिफा मातरि शाखायामवरोहे नदीभिदि ।
नद्या कशायां कुमुदमूले मासीहरिद्रयो ॥६ ३९॥
शिबरौशीनरे क्रव्यात्पक्षिभिन्भूजवृक्षयो ।
शिबिका तु कुबेरीयगदाशिबिकयोर्मता ॥६ ४ ॥
शिबिर तु मत स्कन्धावारे धान्यान्तरऽपि च ।
शिम्बि शिमीवल्कार्येऽपि शिम्ब्यां च क्लीत्व इष्यते ॥६ ४१॥
शिम्बो द्वे मृगजातौ स्त्री शिम्बी निष्पावनामनि ।
वल्ल्यां शिम्बा तु मुद्गादिसस्याना [बीजकोशके] ॥६ ४२॥
शिम्बस्तु चक्रमर्देऽपि पुमान्कैश्चित्प्रकीर्त्तित ।
शिम्बल क्षुद्रशिम्बेऽपि पुमांश्चैव द्रुमान्तरे ॥६ ४३॥

शिम्बल शाल्मले पुष्पे ऋग्भाष्ये सायणोऽब्रवीत् ।
शिम्बि शिम्ब्यां तथा स्त्रीत्वे वल्ल्यां निष्पावनामनि ॥६ ४४॥
शिम्बिक कृष्णमुद्गे ना शिम्ब्या स्त्री शिम्बिका मता ।
शिम्बी शिम्ब्या च निष्पावे कपिकच्छ्वां[स्त्रिया मता] ॥६ ४५॥
शिम्यु समर्थे त्रि पुंभू नृजातिभिदि शिम्यव ।
शिरोऽनपिप्पलीमूले भूर्जेऽपि शयनीयके ॥६ ४६॥
स्त्रीपुंसयोरजगरे शिर एव प्रकीर्त्तित ।
शिरस्तु मस्तके श्रेष्ठ क्लीब स्यात्पर्वतान्तरे ॥६ ४ ॥
आरम्भेऽग्र सामभिद्यापो योतिर्मन्त्र इष्यते ।
शिरस्का शिबिकाया स्याच्छिरस्क तु शिरस्त्रके ॥६ ४८॥
शिरस्त्र तु कपालेऽपि शिरोरक्षणवस्तुनि ।
शिरस्थो व्यवहारस्थेऽभियोक्तर्यपि नायके ॥६ ४९॥
शिरस्यो ना शिरःकेशे शिरःसम्बन्धिनि त्रिषु ।
वाच्यवद्धातुकेऽथ स्यान्ना शिरिर्बाणखड्गयोः ॥६ ५ ॥
शिरिर्यालमृगेऽपि द्वे शलभेऽपि प्रकीर्त्तित ।
शिलम्बस्तु कुविन्देऽपि मुनावपि पुमान्मत ॥६ ५१॥
शिरिणा तु स्त्रियां रात्रौ गुह्याया कस्यचिन्मते ।
शिरिम्बिठ पुमान्मघे [ऋग्वेदे परिकीर्त्तित] ॥६ ५२॥
शिरीषो वृक्षभेदेऽथ नृभूग्रामान्तरे मत ।
शिरीषक शिरीषेऽपि तथा नागान्तरे मत ॥६ ५३॥
शिरीषिका न्वय स्त्रीत्वे वृक्षभेदे प्रकीर्त्तिता ।
शिरोरुजा शिरोव्याधौ सप्तपर्णद्रुमेऽपि च ॥६ ५४॥
शिरोरुह कचे शृङ्गे काकनासा शिरोरुहा ।
शिलजौषधिभेदे स्त्री शैलेये शिलज मतम् ॥६ ५५॥
शिलोऽस्त्री कणिशाऽऽदाने पारियात्रसुते तु ना ।
शिलाऽश्मनि च कर्पूरे द्वाराऽधस्स्थितदारुणि ॥६ ५६॥
शिलाकुट्टस्तु टङ्केऽथ पुमान्पाषाणशिल्पिनि ।
शिलाज त्वयसि क्लीब शिलाजतुनि च स्मृतम् ॥६ ५ ॥

स्याच्छिलाकुसुमे पारसीकतैले तथा मतम्।
शिलाटक स्यादट्टेऽपि विलेऽपि च तिले स्मृतौ ॥६ ५८॥
शिलाधातुस्तु खटिकाहरितालकगैरिके।
शिलापेषस्तु पेषण्यां तथा धा यादपेषके ॥६ ५९॥
शिलावहा नदीभेदे स्त्री नृभूम्नि जना तरे।
शिलासन तु शैलेये क्ली शिलाकुसुमेऽपि च ॥६ ६ ॥
शिलिर्ना भूजवृक्षे स्त्री द्वाराधस्थितदारुणि।
शिली गण्डूपदीभेक्योर्द्वाराधस्थितदारुणि ॥६ ६१॥
स्तम्भशीर्षे तथा बाणे शल्येऽपि स्त्रीव इष्यते।
शिलीमुख शरे पुसि भ्रमरे तु द्वयोर्मत ॥६ ६२॥
शिलो थ नपि शैलेये क्ली शिलाकुसुमेऽपि च।
शिलोद्भव क्ली शैलेये स्याच्छिलाकुसुमेऽपि च ॥६ ६३॥
तथा च दनभेदेऽपि सुवर्णेऽपि प्रकीर्त्तितम्।
शिल्प नपुसक प्रोक्त कारुकर्माण कर्मणि ॥६ ६४॥
कर्मा तराणां निर्माणविज्ञानेऽपि तथा मतम्।
शि पाचार्या तु वपनशालाया यौगिकेऽपि च ॥६ ६५॥
शिव शम्भौ पद्मरागे गोरसे शीधुकीलयो।
रुद्रभेदेऽपि शैवेऽपि तथा लिङ्गे शिवस्य च ॥६ ६६॥
देवे वेदे षष्ठमासे वालके गुग्गुलावपि।
पारते कृष्णधत्तूरे योगभित्पुण्डरीकयो ॥६ ६ ॥
शुक्रे काले वसौ शाके सुनिषण्णाभिधे पुमान्।
द्वे तु वातमृगे स्त्री तु शम्भोर्नवसु शक्तिषु ॥६ ६ ॥
एकस्याञ्च गवीध्वार यक्षुद्रधा ये नदीषु च।
हरीतक्यामामलक्या तामलक्या शमीद्रुमे ॥६ ६९॥
श्यामाहरिद्रादूर्वासु पीतवा व तरेऽपि च।
छन्दोभित्पिप्पलीमूलनेमिमातृनदीभिदो ॥६ ७ ॥
तुलस्यां क्रोष्टुभेदे च दीप्तजिह्वाह्वये स्मृता।
क्ली तु वारिणि कल्याणे स्यौणेये मूलका तरे ॥६ ७१॥

चाणक्यमूलकाभिख्ये सुखे व्योम्नि च सैन्धवे ।
सामुद्रलवणे श्वेतटङ्कणे च दनेऽपि च ॥६ ७२॥
तारेऽप्यामलके लोहे तगरे वर्षमिद्यपि ।
जम्बूप्लक्षद्वीपगते पुराणे शैवनामनि ॥६ ३॥
मोक्षे तु नस्त्री गौर्यां तु द्वयमेतच्छिवी शिवा ।
त्रि तु स्याच्छुभयुक्तेऽस्य सदा वाऽन्ताद्युदात्तता ॥६ ७४॥
शिवङ्करो ना खड्गे स्यादथ त्रि शिवकारिणि ।
शिवप्रिय पुष्पवृक्षे वसुभद्र इति श्रुते ॥६ ७५॥
शिशिम्बष्ठस्तु मेघेऽपि भरद्वाजऽपि चोच्यते ।
विशेषतो च शिशिरो शीते ना त्रि तु तद्वति ॥६ ७६॥
शिशु पुस्यषिभेदे च स्कन्दे च द्व तु बालके ।
शिशुकस्तु द्वयोर्बाले शिशुमारे तथैव च ॥६ ७॥
उलूपीसञ्ज्ञके यादोऽन्तरे ना तु द्रुमा तरे ।
शिशुप्रिय क्ली कल्हारे सौगन्धिकमिति श्रुते ॥६ ८॥
शिंशुमारस्तु पुल्लिङ्ग उक्तस्तारामयाऽच्युते ।
शिंशुमारो द्वयोर्यादोऽन्तरे जलकपावपि ॥६ ७९॥
शिश्विदानो द्वे कृकलासे त्रि स्यात्कृष्णकर्मणि ।
शीकरस्तु पुमा वाताहृते स्नेहकणे मत ॥६ ८ ॥
हस्तिहस्तोद्भूतदानजले च शबले गुणे ।
तथा शीतगुणे त्रिस्तु तद्गुणा यतराऽन्वते ॥६ ८१॥
शीघ्र क्लीबमसन्ये ना वायौ क्षिप्र तु तत्त्रिषु ।
शीत जले च शैत्ये क्ली त्रिषु शैत्यगुणान्विते ॥६ ८२॥
शीतस्तु वेतसे पुंसि तथा श्लेष्मातके मत ।
शीतकस्त्वलसे त्रि स्त्री तु ज्वालाभिदि शीतिका ॥६ ८३॥
करवीरे पुमाञ्शीतकुम्भस्तत्प्रसवे तु नप् ।
शीतपङ्कस्तु ना शीधौ योगार्थे तु यथायथम् ॥६ ८४॥
शीतलश्चम्पकतरौ तथा शीतगुणे पुमान् ।
त्रि तद्वति स्त्री तु रक्तवर्णायां गवि शीतला ॥६ ८५॥

सैन्धवे क्ली शीतशिव ना तु शालेयभेषजे।
शीधुरस्त्री मद्यमात्रे पक्वेक्षुरसजेऽत्र च ॥६८६॥
शीरा कार्पासिकाया स्त्री शीरस्त्वजगरे द्वयो।
लताङ्कुशे तु शीरीति स्त्रीलङ्ग परिकीर्त्तिता ॥६८ ॥
शीर्णिस्त्वङ्गे विशरणे तथा रोगे भवेत्स्त्रियाम्।
शीर्वी स्त्री पुंसयोर्यङ्कौ कुमौ च परिकीर्त्तित ॥६८८॥
शीर्षण्य क्ली शिरस्त्राणे योधाना शीषकाह्वये।
केशे ना विशदे तु त्रिमुख्ये मूधभवेऽपि च ॥६८९॥
शीलमस्त्री स्वभावेऽपि सद्वृत्तेऽपि प्रकीर्त्तितम्।
शीवा द्वयो शृगाले चाऽजगरे सप एव च ॥६ ९ ॥
शुको याससुते कीरे रावणस्य च मन्त्रिणि।
ग्रन्थिपर्णे शिरीषे च शुक स्या छोणके क्वचित् ॥६९१॥
शुकनासष्टुण्टुवृक्षे पुमाश्चागस्त्यपादपे।
शुकपत्रो निर्विषा ये सर्पा द्वादशकीर्त्तिता ॥६९२॥
तेषामेकत्र योगे तु लिङ्गाद स्याद्यथायथम्।
शुक्तस्तु पूतिता प्राप्त परुषेऽम्लेऽपि वाच्यवत् ॥६९३॥
शुक्त तु काञ्जिके कल्कजातावाप नपुंसकम्।
य मस्त्वादिशुचौ भाण्डे सक्षौद्रगुडकाञ्जिके ॥६९४॥
त्रिरात्र धान्यराशिस्थ तत्र चापि प्रकीर्त्तितम्।
शुक्तिस्तु मुक्तास्फोटे स्त्री स्यादङ्कोलदलौषधे ॥६९५॥
तिन्तिड्या तिन्तिडीकाया फले दुर्नामिकाह्वये।
जलजन्तौ च घोटानां रोमावर्त्तान्तरेऽपि च ॥६९६॥
कर्षो माने तथा कर्षे द्विगुणो मानकेऽपि च।
अक्षिरोगविशेषे च पुमांस्त्वन्यत्र तरे स्मृत ॥६९७॥
शुक्रस्तु श्वेतवर्णे च शुक्लपक्षे पुमान्मत।
श्वेतवर्णान्विते तु त्रि शुक्र त्वम्सु नपुंसकम ॥६९८॥
शुक्लोऽर्के सितवर्णे च चन्द्रेऽग्नौ भार्गवेऽध्वरे।
दक्षिणाग्नौ क्रताग्रशौ यज्ञपात्रगृहान्तरे ॥६९९॥

ज्येष्ठमासेऽपि शुक्ल तु हेम्नि पुण्ये धने जने ।
रेतोऽक्षिरुग्भिदो सामा तरे द्वे तु शिशौ द्विजे ॥६१ ॥
त्रि तु मेध्ये सिते चाथ धर्मसज नररश्मिषु ।
शतत्रये रवे शुक्रा इति स्त्री वे प्रकीर्त्तिता ॥६१ १॥
शुण्ठोऽपे त्रिषु ना तु स्या पशौ पेश्या तृणा तरे ।
शुण्ठिर्ना शुण्ठतौ धातौ स्त्री तु स्यान्नागरौषधे ॥६१ २॥
शुण्डा सलीलहस्ति या मादराहस्तिहस्तयो ।
शुद्धोऽस्त्रिया जलेऽर्के तु ना त्र केवलपूतयो ॥६१ ३॥
शुद्धा तोऽ त पुरे कक्ष्या तरे गुह्ये तथा पुमान् ।
शुनो वायौ सुख तु क्ली शुनके तु द्वयोर्मत ॥६१ ४॥
शुनकस्त्वृषिभदे ना शुनि स्त्रीपुसयोर्मत ।
शु न्ध्यवोऽप्सु स्त्रियो शु ध्युर्नाऽह्नोऽ यर्के द्वयो खगे ॥६१ ५॥
शुभ लग्ना च नवमे राशावप्सु च मङ्गले ।
मञ्जुप्रशस्तयोस्तु त्रिर्मङ्गलेन तथा विते ॥६१ ६॥
अर्घ्यायां तु शुभेत्येषा स्त्रीलिङ्गे परिकीर्त्तिता ।
शुभिस्त्रि रम्ये विप्रे द्वे नाऽवनौ च ऋषौ रवौ ॥६१ ॥
शुभ्र शौक्ल्ये पुमास्त्रिस्तु शुक्ले स्याद्दीप्तिमत्यपि ।
शुल्कोऽस्त्री स्यात्प्रदेयेऽर्थे मार्गादिषु महीपते ॥६१ ८॥
विवाहाय वराद्ग्राह्ये धनेऽपि परिकीर्त्तिता ।
शुश्रूषा श्रोतुमि छायामुपास्तौ च कथानके ॥६१ ९॥
शुषिर्ना शुष्यतौ धातौ स्त्री तु र न्ध्रे च शोषणे ।
शुषिरो विवरे न स्त्री वाद्यभेदे नखौषधे ॥६११ ॥
पाशादौ तु छिद्रयुक्ते शुषिरस्त्रिषु कीर्त्तित ।
एत चासाम्प्रत यस्माद् त्यादि सुषिरो मत ॥६१११॥
शुष्णो ग्रीष्मांशुक्ष्यर्के ना द्वे शोषे बले तु नप् ।
शुष्म बलेऽप्सुसयोगे शुष्म कालेऽनिले रवौ ॥६११२॥
शूकोऽस्त्री धा यसूक्ष्माग्रे शुङ्गाऽनुक्रोशयोरपि ।
शूद्रश्चतुर्थवर्णे च तथा सकरजे द्वयो ॥६११३॥

स्त्र्यर्थे शूद्राऽत्र पुयोगे तु शूद्री भूम्नि तु स्मृता ।
शूद्रा घर्मार्थरश्मीनां त्रिशया प्रथमे शते ॥६११४॥
नपुसक तु रजते शूद्रमेतत्प्रकीर्त्तितम् ।
शून्य रिक्ते मोहवतो वचस्यपि च वाच्यवत् ॥६११५॥
शूरो वीरे त्रिषु श्वेतशालौ ना कुक्कुटे द्वयो ।
शूर्पोऽस्त्री परिमाणेऽपि द्रोणयुग्मात्मके मत ॥६११६॥
अर्द्धप्रस्थात्मके मानेऽपि च द्रोणचतुर्गुणे ।
प्रस्फोटनक्रियाया च साधनेऽपि प्रकीर्त्तित ॥६११ ॥
शूर्पकर्णो हस्तिान द्वे यौगिके तु यथायथम् ।
शूलोऽस्त्री शस्त्रभेदे च तथा रोगान्तरे मत ॥६११८॥
स्या छूलनाशक सौवर्चलाख्ये लवण नपि ।
शूलिकस्त्रि शूलवति द्वे विप्राशूद्रसभवे ॥६११९॥
शूली तु शूलयुक्ते त्रि शङ्करे तु पुमा मत ।
शृङ्खल कटिसूत्रे त्रिद तिना पादब धने ॥६१२ ॥
शृङ्गोऽस्त्री शैलशिखरे सानौ क्रीडाऽम्बुयन्त्रके ।
विषाणे च प्रभुत्वे च स्यात्प्राधा यप्रधानयो ॥६१२१॥
क्लीब तु वलिनि स्त्री तु शृङ्गी म स्या तरे मता ।
मद्गुरस्य स्त्रियां ककटशृङ्ग्यां च विषौषधे ॥६१२२॥
अथ शृङ्गस्तु पुल्लिङ्गो जीवकाख्यभेषजे ।
शृङ्गारस्तु पुमान्द तबीजस्तम्बेऽम्बुसभवे ॥६१२३॥
शृङ्गाट तत्फले युद्धयन्त्रभेदे चतुष्पथे ।
शृङ्गारो लम्पटे पुसि नस्त्री तु रस उज्ज्वले ॥६१२४॥
तथा सिन्दूरचूर्णे च करिणां मण्डनान्तरे ।
शृङ्गारी पूगवृक्षे ना सुवेषे त्वभिधेयवत् ॥६१२५॥
शृङ्गी तु वृषभेऽश्वे च यस्य शृङ्ग पदे भवेत् ।
मांसबुद्बुद उक्तोऽय पुमांश्च वृषभौषधे ॥६१२६॥
शृङ्गिणी तु गवि स्त्रीत्वे महिषे तु द्वयोर्भवेत् ।
शृङ्गिबेर तु शुण्ठ्यामप्यार्द्रकेऽपि नपुसकम् ॥६१२७॥

शेवा स्त्री प्रचलासञ्ज्ञनिद्राया क्ली सुखे धने ।
शेषोऽप्रधानेऽनन्तारयसर्पराजे च शार्ङ्गिण ।।६१२८।।
अवतारा तरेऽप ये त्रिस्व यत्रोपयुक्तत ।
माल्याक्षतादिदाने तु स्त्री शेषा परिकीर्त्तिता ।।६१२९।।
शेखस्वनन्यपूर्वाया विप्राया व्रात्यविप्रजे ।
द्वयोरथ शिखा योगि येष शैखस्त्रिषु स्मृत ।।६१३ ।।
शै य शीतलतायां च नैशित्ये शौक्ल्यकार्ष्ण्ययो ।
शैलस्तु भूधरे पुसि शिलासम्ब धिनि त्रिषु ।।६१३१।।
वृत्तौ शीलभवाया स्त्री शैलीति परिकीर्त्तिता ।
शैलाट शुक्लकाचे च देवले च पुमा मत ।।६१३२।।
शैलाटस्तु द्वयो सिंहे किराते च प्रकीर्त्तित ।
शैलूषो ना बिल्वशण्डजात्योर्द्वे कितवे नटे ।।६१३३।।
शैलेय सि धुलवण क्लीब स्यात्तार्क्ष्यशैलके ।
कालानुसार्यधातौ च मधुपे तु द्वयोरयम् ।।६१३४।।
स्त्रिया शैवलिनी नद्या वाच्यवत्तु सशैवले ।
शैशव तु द्वयो साम्नोरु चतागीतयोस्तथा ।।६१३५।।
नपुसक शिशुत्वेऽथ शिशुसम्ब धिनि त्रिषु ।
शोक शुचि पुमा स्त्री तु शोकी रात्रौ प्रकीर्त्तिता ।।६१३६।।
शोचिज्वलति शुद्धत्वे पैङ्गल्येंशौ शुग्विशुद्धयो ।
शोठो धूर्त्तेऽलसे मूर्खे नीचे पापरते त्रिषु ।।६१३ ।।
शोणो हिरण्यबाह्वारयनदभेदे प्रकीर्त्तित ।
टुण्डुवृक्षे रक्तवर्णे त्रि तु तद्वति तत्र च ।।६१३८।।
स्त्र्यर्थे शोणा शोण्यथाश्वे द्वे कोकनदवर्णके ।
शोणित रुधिरे वृक्षनिर्यासे कुङ्कुमेऽपि नप् ।।६१३९।।
रक्तवर्णयुते त्वेतदभिधेयवदिष्यते ।
शोधना शोधयत्यर्थे न ना शुद्धौ तु नप्स्मृतम् ।।६१४ ।।
शोधनोऽङ्कोलवृक्षे ना सम्माज या तु शोधनी ।
अथ शोधन एष स्याद्वाच्यवच्छुद्धिसाधने ।।६१४१।।

शोभन क्ली सुवर्णेऽर्थे शोभिते त्रि तु सुन्दरे ।
शोषक पश्चिमे कोष्ठश्रेणावारम्य दक्षिणात् ॥६१४२॥
कोष्ठे य सप्तमे वास्तुदेवस्तत्र पुमान्मत ।
अथ त्रि शोषयितरि शोष्टर्यपि च शोषक ॥६१४३॥
शौक शुकसमूहे च स्त्रीणां च करणान्तरे ।
शौण्डो द्व कुक्कुटे शौण्डी पिप्पल्या जलदावलौ ॥६१४४॥
शौण्डो तु मत्त शुण्डासम्बन्धि यप्यभिधेयवत् ।
औत्थिताशनिके शौन्यादनिकस्तस्करेऽपि च ॥६१४५॥
शौर्यं शक्त्याह्वयबले लग्नाद्राशौ तृतीयके ।
शूरस्य भावक्रिययोस्तथैव स्यान्नपुसकम् ॥६१४६॥
श्यामो ना हरिते वर्णे वर्णे कृष्णे तथाऽम्बुदे ।
पीलुद्रुमे च श्यामा तु निशीथि यां स्त्रियामियम् ॥६१४ ॥
पिप्पलीफलिनीविद्युत्पालिनीशारिवासु च ।
स्त्री यञ्जनकृताया च कयाया पोतकीखगे ॥६१४८॥
क्लीब योम्नि मरीचेऽथोक्तवर्णान्वितयोस्त्रषु ।
श्यामक श्यामाकधाये हेम्नस्तु श्यामिका मले ॥६१४९॥
श्यामलोऽश्वत्थवृक्षे ना काष्र्ये च त्रिषु तद्वति ।
श्यामला स्त्री मृगीभेदे प्रोक्त यस्य च लक्षणम् ॥६१५ ॥
श्यामवल्ली लताया च श्यामे च मरिचे स्त्रियाम् ।
श्यावोऽर्काश्वे च कपिशे वर्णे त्रिषु तु तद्वति ॥६१५१॥
श्येनस्तु श्वतवर्णे ना त्रि तु तद्वति तत्र च ।
स्त्र्यर्थे श्येना तथा श्येनी मृगे द्वे चापि पक्षिणि ॥६१५२॥
श्येन सामान्तरे क्रत्वन्तरे चाप्याभिचारिके ।
श्येनसञ्ज्ञतृणप्राणिजान्यो स्यादेतयोर्यदा ॥६१५३॥
स्त्र्यर्थे वृत्तिस्तदारूप श्येनीत्येव प्रकीर्त्तितम् ।
द्वे त्वश्वे पत्रिसञ्ज्ञे च श्येन पक्ष्यन्तरे स्मृत ॥६१५४॥
श्येना तु प्राचिकासञ्ज्ञपक्षिजातौ स्त्रियां मता ।
श्येन्यो द्वयोरजगरे शकुनावपि कीर्त्तित ॥६१५५॥

श्रद्धास्तिक्ये स्पृहायां च गर्भिण्यास्तु विशेषत ।
श्रद्धालुर्दोहदि या स्त्री श्रद्धाशीले तु वा यवत् ॥६१५६॥
श्रपणा श्रपयत्यर्थे ननाऽथ श्रपणी स्त्रियाम् ।
स्यादग्निहोत्रहवणीनामधेये स्रुगन्तरे ॥६१५७॥
श्रमण तु मत शा तौ श्रमणी मुण्डिकौषधे ।
दृष्यालयारयलतायां च क्षपण तु द्वयोर्भवेत् ॥६१५८॥
श्रवण क्ली शृणोत्यर्थे श्रोत्रे पुसि तु विष्णुभ ।
तद्युक्त कालमात्रेऽथ द्वयो प्राण्यन्तरे भवेत् ॥६१५९॥
श्रवणा तु स्त्रियां रात्रिविशेषे पूर्णिमान्तरे ।
श्रवो यश श्रोत्रबलधनाऽ नेषु नपुसकम् ॥६१६ ॥
श्रविष्ठा वसुभेऽपि स्त्री तद्युक्त कालमात्रके ।
अथ श्रविष्ठो जातेऽत्र वा यवत्परिकीर्त्तित ॥६१६१॥
श्राणा स्त्रिया यवाग्वा स्यात्क्षीरात्तु हविषस्तथा ।
अन्यत्र पक्वे श्राणस्त्रिवथ पाके नपुसकम् ॥६१६२॥
श्राद्ध श्रद्धावति त्रि स्यात्स्त्रीत्वे श्राद्धेऽति तत्र च ।
श्राद्ध तु भोजनाया स्यात्पितणा क्लीबलिङ्गकम् ॥६१६३॥
श्रावक श्रावयितरि श्रोतरि त्रिगुणे तु ना ।
कण्ठजे गायकानां यो दूरत श्रावयेद्ध्वनिम् ॥६१६४॥
स्त्रीपुसयोस्तु जैनानां श्रावक स्यादुपासके ।
श्रावणी पूर्णिमायां स्त्री श्रवणर्क्षयुजि स्मृता ॥६१६५॥
मुण्ड्यौषधे च दृष्यालीनाम्नि वल्ल्यन्तरेऽपि च ।
श्रावणो ना श्रावणिके मासि त्रिषु तु यौगिके ॥६१६६॥
श्रीरिन्दिरायां [सम्पत्तौ लवङ्गे च स्त्रियाम्मता] ।
श्रीकण्ठस्तु शिवे पुसि तथैव कुरुजाङ्गले ॥६१६ ॥
श्रीगर्भस्तु श्रियो गर्भे खड्गेऽपि परिकीर्त्तित ।
श्रीघन दृघनि क्लीब बुद्धे तु श्रीघन पुमान् ॥६१६८॥
श्रीपर्णं त्वग्निमन्थेऽपि कमलेऽपि नपुसकम् ।
श्रीपर्णी तु स्त्रियां वृक्षे काश्मर्ये कट्फलेऽपि च ॥६१६९॥

श्रीपुष्प तु श्रिय पुष्पे सितपद्मेऽपि कीर्त्तितम् ।
श्रीफल्यामलकीनील्योर्बिल्वे तु श्रीफल पुमान् ॥६१७ ॥
श्रीमास्तु पुसि गोविन्दे कुबेरगृहकेतुषु ।
इटचरारण्यबलीवर्दे कदम्बतिलकारण्ययो ॥६१ १॥
वृक्षयोर्गुग्गुलौ द्वे तु शुके लक्ष्मीवति त्रिषु ।
श्रीवत्स श्रीपतौ तस्य लाञ्छनेऽपि पुमान्मत ॥६१ २॥
श्रीव साङ्को वासुदेवे वृके त्वेष द्वयोर्मत ।
श्रीवास श्रीपिष्टनाम्नि निर्यासे केशवेऽपि च ॥६१ ३॥
श्रीह्रदस्तु प्रपाया च पुँल्लिङ्गाऽपि श्रियो ह्रदे ।
श्रुत नपुसक शास्त्रे श्रवणाख्ये च कर्मणि ॥६१ ४॥
आकर्णितेऽत्यवधृतेऽपि श्रुत वाच्यवन्मतम् ।
श्रुतकर्मा यौगिकेऽपि पुमास्तु स्याच्छनैश्चरे ॥६१७५॥
श्रुतिस्तु वेदे श्रवणक्रियाया च श्रोत्र एव च ।
गीतिधर्मविशेषे च शब्दे चाप्यभिधायके ॥६१ ६॥
श्रूष बले सुखे श्रषा शाकमित्कासमदयो ।
श्रेणि पङ्क्तौ च धारायामष्टादशगणान्तरे ॥६१७ ॥
अक्ली समानजातीयशिल्पिना सहतावपि ।
श्रेय सामान्तरे क्लीब द्वाइये मानुकोद्भवे ॥६१ ८॥
मोक्षे धर्मे शुभेऽथ त्रिस्तद्यतेऽतिप्रशस्यके ।
स्त्र्यर्थे नपो श्रेयसीति स्त्रिया तु श्रेयसी तथा ॥६१ ९॥
पाठाया हस्तिपिप्पल्या हरीतक्यां च कीर्त्तिता ।
श्रेष्ठ ताम्र मत क्लीब स्या प्रशस्यतमे त्रिषु ॥६१८ ॥
श्रोणि कट्यामुपस्थे च स्त्रीलिङ्गे परिकीर्त्तिता ।
श्रोत्रकान्ता वृद्धिसज्ञभेषजे यौगिकेऽपि च ॥६१८१॥
श्लक्ष्ण तु मसृणेऽल्पेऽपि सुन्दरेऽप्यभिधेयवत् ।
श्लिकुर्नना विषादे ना ज्योतिषेऽपि मृगास्थनि ॥६१८२॥
अथ श्लेष्मघना भल्ल्यां केतक्यां च स्त्रियां मता ।
पिण्यामल्ल्यो स्त्रियां श्लेष्मघ्नी त्रिस्तु श्लेष्महन्तरि ॥६१८३॥

श्लेष्मा कफे चर्मणश्च विकारे द्रढकाह्वये ।
रथस्य शीघ्रवहनसाधने चापि वस्तुनि ॥६१८४॥
गोधूमे श्लेष्मलस्त्रिस्तु श्लेष्मे तच्छलेष्मकारिणो ।
श्लोको यशसि पद्ये च तथा वाचि पुमान्मत ॥६१८५॥
श्वदंष्ट्रा गोक्षुराऽभिख्यस्तम्बे यन्त्रा तरेऽपि च ।
परिखाया बहिर्भूमौ राज्ञा द न्ता तरे शुनाम् ॥६१८६॥
श्वपचोऽन यपूर्वायां किरात्या निष्ठ्यत सुते ।
विप्राचण्डालज च द्वे त्रि शुन पक्तरि स्मृत ॥६१८ ॥
श्वपाकोऽम्बष्ठतो विप्रचा क्षत्तुश्चोग्रस्त्रिया सुते ।
उग्रात्क्षत्रस्त्रिया चापि शुन पाके तु ना मत ॥६१८८॥
श्वयो बले गदे शोषे पु लिङ्ग परिकीर्त्तित ।
श्वयी त्रि श्वयथौ च द्रे चापि पुल्लिङ्ग इष्यते ॥६१८९॥
श्ववृत्तिस्तु शुना वृत्तौ सेवाया च प्रकीर्त्तिता ।
श्वशुरो जनके पत्युर्जायायाश्च पुमान्मत ॥६१९ ॥
स्त्रियां तु श्वशुरा भ्रातृजायामिय सम्परिकीर्त्तिता ।
श्वशुर्यो देवरे च द्रे ना द्वयो श्यालके मत ॥६१९१॥
श्वश्रू श्वशुरपत्यां च पितृष्वसरि च स्त्रियाम् ।
श्वसन क्ली मत श्वासे ना वायौ मदनद्रुमे ॥६१९२॥
श्वात्र नपुसक क्षिप्रे धनेऽपि परिकीर्त्तितम् ।
श्वाल स्यादाशुगत्या ना कुक्कुरे तु द्वयोर्मत ॥६१९३॥
श्वेतस्तु ऋषिभेदेऽपि शुक्लवर्णे पुमान्मत ।
कुलशैलान्तरे मेरोरुत्तरान्नीलपर्वतात् ॥६१९४॥
उत्तरे च त्रिषु श्वेत शुक्लवर्णान्विते मत ।
क्लीब तु दध्नि रजतेऽप्यथ श्वेता सुराऽ तरे ॥६१९५॥
पैष्टिकीसञ्ज्ञके स्त्री स्याल्लतान्तरनदीभिदो ।
भवेत्सुग धौ तुलसीसञ्ज्ञके च कटिङ्करे ॥६१९६॥
सितशेफालिकायां तु स्याच्छ्वेतसुरसा स्त्रियाम् ॥६१९६॥

## ष

षटक षण्णां गणे त्रि स्याद्विशेषात्कामरोषयो ॥६११९ ॥
मदलोभमुदा मानस्य च सङ्घे पुमान्मत ।
षडस्रा तु स्त्रियामेषा स्याच्छागलकपादपे ॥६११९८॥
प्रसिद्धे चापि शार्ङ्गष्ठादासाप्रभृतिभि पदै ।
वनस्पत्यन्तरे त्रिस्तु षटकोणे पारकीर्त्तिता ॥६११९९॥
षडग्रन्था पिप्पलीमूले वचाशठ्योरपि स्त्रियाम् ।
षण्ड स्यादिटचरे पण्डे मूर्धं योष्मादिक पुमान् ॥६२ ॥
एष वेर्षवरे नीलवृषो सर्गे च कीर्त्तित ।
षण्डोऽस्त्री वृक्षपद्मादिवृन्दे पुसि तु गोपतौ ॥६२ १॥
षण्डाली स्त्री सरागाया तैलमाने सरस्यपि ।
षष्टिहायन-शब्दोऽय गजे स्याद्वृद्धे स्त्रिया पुन ॥६२ २॥
समाहारद्विगौ षष्टिहायनी भवेत्पुन ।
बहुव्रीहौ हि तत्रापि स्त्रियां ङीप् षष्टिहायनी ॥६२ ३॥
वयस्येवात्र ङीबुक्त शालादौ षष्टिहायना ।
षष्ठ तु पूरणे षण्णां त्रि षष्ठी तु स्त्रियां तिथौ ॥६२ ४॥
स्कान्द्या षष्ठविभक्तौ च पावत्याश्च प्रकीर्त्तिता ।
षाडवो गीतिभेदेऽम्लमधुरोर्मिश्रिते रसे ॥६२ ५॥
षाडवस्त्वम्लमधुररसयुक्ते त्रिषु स्मृत ।
षाण्मासी सप्तमे मासि कर्त्तव्ये श्राद्ध इष्यते ॥६२ ६॥
षण्मासीयोगिनि त्वेष वाच्यवत्परिकीर्त्तित ।
षाष्ठिक व्रतभेदे षष्ठकालांशे प्रवर्त्तने ॥६२ ॥
मेघवत्तु क्रतुमति षष्ठाहभववस्तुनि ।
पिङ्गो वेश्यापतौ पुसि वेश्याचार्येऽपि कीर्त्तित ॥६२ ८॥
पलमाने षोडशिका न नाथाऽस्त्री पलद्वये ।
ष्व्यूमश्चन्द्रे जले रश्मौ तन्तौ स्यान्मङ्गलेऽपि च ॥६२ ९॥

# स

सो विष्णावीश्वरे सा तु लक्ष्म्या गौर्यामपीष्यते ।
सयद्युद्धेऽग्निचित्याया द्वादशस्विष्टकासु च ॥६२१ ॥
सयद्वरो नृपे पुसि क्लीब सयद्वर रणे ।
अथ सयद्वरस्त्रि स्यादनूपेऽप्यभयप्रदे ॥६२११॥
सयाव समिश्रणे च भक्ष्यभदेऽस्य लक्षणम् ।
समिता वम्लदुग्धार्द्रा पक्वा खण्डे घृतोत्तरे ॥६२१२॥
सयावोऽय युतश्चूर्णे खण्डैलामरिचाद्रकै ।
सरम्भ पुनराटोपे क्रोधेऽपि परिकीर्त्तित ॥६२१३॥
सरोधस्तु क्षये पुसि तथा सरोधने मत ।
सलयस्तु पुमान्स्वापे तथैकीभाव इष्यते ॥६२१४॥
सवत्सरोऽब्दभेदे चाऽदमात्रेऽपि कीर्त्तित ।
क्लीब सवनन याच्ञासभक्त्योश्च वशीकृतौ ॥६२१५॥
सवत्तस्त्वृषिभेदे स्याद्वत्सरे च जगत्क्षये ।
सवत्तनाया सवृत्तावपि सवत्र पुस्ययम् ॥६२१६॥
सवत्तको हलिहले तथैव वडवानले ।
सवर्त्तिका नवदले नलि यावेष्टितेऽपि च ॥६२१७॥
पुमान् सवसथ प्रोक्तो ग्रामे सवसनेऽपि च ।
सवालश्च द्रकिरणे गजपुच्छस्य मूलत ॥६२१८॥
चतुर्धा च विभक्तस्य द्वितीयांशे प्रकीर्त्तित ।
सवास सहवासे च राजधान्यां तथा पुमान् ॥६२१९॥
स्त्रिया तु मुखशालायां न तु ना सहवासने ।
सवासन कर्मशाला न तु ना सहवासने ॥६२२ ॥
सवित्तिस्तु स्त्रियां ज्ञाने सवादेऽपि प्रकीर्त्तिता ।
सविद्युद्धे प्रतिज्ञायां सङ्केताचारनामसु ॥६२२१॥
सभाषणे क्रियाकारे ज्ञानतोषणयोरपि ।
सवृत क्ली सवरणे वर्णधर्मान्तरेऽपि च ॥६२२२॥

स्या महाप्रलये तद्व संहारी त्वघशालिका ।
सहित त्रिषु सश्लिष्ट सहिता तु स्त्रियामियम् ॥६२३ ॥
शास्त्रग्र था तरे वेदभागेऽपि क्वचिदि यते ।
अतीव सन्निकर्षे च वर्णाना क्ली तु सामनि ॥६२३८॥
स्वादिष्ठावर्गगीते स्यात्षष्ठे च नवमेऽपि च ।
सहृति प्रलयाकषसमाप्तिषु भवो स्त्रयाम् ॥६२३९॥
सक्थ्यूरा शकटाङ्गे च कस्मिश्चि स्यान्नपुसकम् ।
सखा सहायसुहृदोस्त्रि स्त्रीत्वेऽत्र सखीति च ॥६२४ ॥
भाषाप्रयोगे रूप स्याद्व धौ तु स्यात्सखा पुमान् ।
सगर सविषे त्रि क्ली योम्नि ना तु नृपा तरे ॥६ ४१॥
सङ्करो ग्निचटत्कारे समाज यवपुञ्जिते ।
सङ्कीर्णे च त्रिषु स्त्री तु क याभदे नृदूषिते ॥६२४२॥
विवाहायोग्यक यानामेकत्र परिकीर्त्तिता ।
नवदूषितक याया सङ्कारी पुनरु यते ॥६२४३॥
पुमा सङ्कसुक श्राद्धाऽग्नौ सङ्कीर्णे तु स त्रिषु ।
तथाऽपवादशीले च यक्ता यक्तेऽपि चारणे ॥६२४४॥
द्वयो सङ्कुचितो हसेऽथाल्पीभूते त्रिषु स्मृत ।
सङ्क्रमस वस्त्रियां दुर्गसञ्चरेऽप्येकमाश्रवम् ॥६२४५॥
उज्झित्वान्याश्रयप्राप्तौ तथैव प्र ययेऽपि च ।
सङ्ख्यमस्त्री रणे स्त्री तु सङ्ख्या स्याद्गणने तथा ॥६२४६॥
एकत्वादौ विचारे च तथैव परिकीर्त्तिता ।
सङ्गो युद्धे सङ्गमेऽथ लवणे सैन्धवे नपि ॥६२४ ॥
सङ्गतो दिवसस्य स्या चतुर्भागे द्वितीयके ।
पञ्चरात्रपय पानव्रतेऽथ मिलिते त्रिषु ॥६२४८॥
सङ्गमो मेलके नस्त्री सङ्गमस्तु व्रता तरे ।
पञ्चरात्र पय पानात्मके पुसि प्रकीर्त्तितः ॥६२४९॥
सङ्गरो ना प्रतिज्ञायां क्रियाकारेऽपि चापदि ।
युद्धे विषे च क्लीव तु सङ्गर स्या छमीफले ॥६२५ ॥

सङ्ग्रहस्तु महोद्योगे स्वीकारे च समुच्छ्रये ।
स्त्रीसङ्ग्रहेऽपि सङ्क्षेपे पुल्लिङ्ग परिकीर्त्तित ॥६२५१॥
सङ्ग्रहो मुष्टिमात्रेऽपि मुष्टौ च फलकादिन ।
सङ्घवादी द्वयोर्मर्त्त्ये यौगिके तु यथायथम् ॥६२५२॥
सङ्घातस्तु मत पुसि समूहे हननेऽस्थनि ।
का यजातिविशेषे च तथैव नरका तरे ॥६२५३॥
सङ्घातिकारणा वेशा स्त्रीलिङ्ग परिकीर्त्तिता ।
त्रिस्तु सङ्घातयितरि सह तर्यपि चेष्यते ॥६२५४॥
स ज स्यात्त्रिषु सम्बद्ध सतो जातेऽपि कीर्त्तितम् ।
स जनस्तु पुमान्साधौ कुलीने भेषवद्भवेत् ॥६२५५॥
स्त्रियां तु सञ्जना हस्तिक पनायामथ स्मृतम ।
नपुसक स जन तु तद्वद्व चोपरक्षणे ॥६२५६॥
सञ्चार सङ्क्रमे सङ्के चारे सस्याचरेऽपि य ।
गत्वा ग वा पर जिज्ञासने तत्र प्रकीर्त्तित ॥६२५ ॥
त्रिषु सञ्चारितर्यत्र सञ्चारक इति स्मृत ।
सञ्चारिका तु भूपस्य कथाया द्रविणादिषु ॥६२५८॥
नियुक्तायां महाकार्ये चास्यां दूत्या तथा स्त्रियाम् ।
सञ्जयो धृतराष्ट्रस्य सचिवे पुसि कीर्त्तित ॥६२५९॥
क्लीव तु सामभेदे स्यादि द्र नरश्चचि स्थिते ।
विश्वाधनानी यारम्य तथा हीनमखा तरे ॥६२६ ॥
सज्ञाऽभिधाने सङ्केते हस्ताद्यैरथसूचने ।
सूर्यभार्यान्तरे बुद्धौ चेतनायां च तत्र तु ॥६२६१॥
उपांशु य च क्रियते स्वेष्वनीकेषु विग्रहे ।
सटा जटायां स्त्री वेऽथ नना सिंहस्य केसरे ॥६२६२॥
सङ्करे तु भटीविप्रसम्भवे स्यात्सटो द्वयो ।
सत्साधौ विद्यमाने च प्रशस्तेऽभ्यर्हिते तथा ॥६२६३॥
सत्ये बुधे शोभने च भेषवत्परिकीर्त्तित ।
सती पतिव्रतोमाश्रीतुवरीभेषजेषु च ॥६२६४॥

सत्परब्रह्मनक्षत्रजलेषु स्यान्नपुसकम् ।
उक्त श ्दे ऽपि स ्छष्दस्तस्य लिङ्ग न निश्चितम ॥६२६५॥
सत्तम स्या ्पू यतमे श्रेष्ठे त्रिष्वतिशोभने ।
सत्त्र वना ्छादनयो सदादाने नपुसकम् ॥६२६६॥
द्वादशाहादियज्ञषु तथैव परिकीर्त्तितम ।
स ्व स्वभावसत्तायां द्रव्य ऽ त करण बले ॥६२६ ॥
पराक्रमे सार्यगुणे ्यवसाया ऽऽ मभावयो ।
माहा ्म्ये च मत क्लीब पारुषे त्वस्त्रियामिदम ॥६२६८॥
पिशाचादौ तथा प्राण स व ज तुषु चोच्यते ।
सत्य क्ली शपथ तथ्ये त्रि तु तद्वति कीर्त्तितम ॥६२६९॥
स या तु सत्यभामार्यकृष्णपत्नया प्रकीर्त्तिता ।
अथ स ्यवती स्त्री स्याद्वेदव्यासस्य मातरि ॥६२ ॥
ब्राह्मयार्येऽपि तृणस्तम्बे स ्ययुक्ते तु भद्यवत ।
सत्यङ्कार पुमा स ्याकृतावपि करापणे ॥६२ १॥
सदन तु गृहे तोये सीद ्यर्थे च कीर्त्तितम ।
सदो यज्ञमहावेदे हविर्धानद्वयस्य हि ॥६२७२॥
पश्चाद्देशे मत क्लीब गोष्ठ्यां तु स्त्री नपुसकम ।
द्यावापृथिव्योस्तु क्लीबे द्विवच सदसी इति ॥६२ ३॥
सदस्यस्त्रिषु सभ्ये च स्याद्यज्ञविधिदर्शिनि ।
सदागति पुमा सूर्ये वायौ चापि प्रकीर्त्तित ॥६२ ४॥
सदाफलो नालिकेरे पुमांश्चोदुम्बरद्रुमे ।
सद्म गेहे जले क्लीब रोदस्यो सद्मनी इति ॥६२ ५॥
सद्य पाको मत स्वप्ने निशाऽत्ययसमुद्भवे ।
सध्रि स्यान्नपि सयोगे ना त्वग्नावनड्डुह्यपि ॥६२ ६॥
सनतस्तु सनोतौ च पुमा ्म्लेच्छे द्वयोर्मत ।
सनातनो ना विष्णौ च विरिञ्चे त्रिस्तु शाश्वते ॥६२ ॥
सनाभिस्तु सपिण्डे च सोदर्ये च द्वयोर्मत ।
सनिर्नदीतटे दाने नृस्त्रियो पथियाञ्चयो ॥६२ ८॥

सन्ततिस्त्ववायें स्यात्परिपर्येऽपि पुत्रयोः ।
सन्तानस्तु कुले कल्पवृक्षभेदे तथैव च ॥६२७९॥
परम्परायां चापत्ये पुंल्लिङ्ग परिकीर्त्तितः ।
सन्दंशो लोहकारोपकरणान्तर इष्यते ॥६२८०॥
सन्दंशनेऽभिचारात्मक्याहक्रन्वन्तरेऽपि च ।
सन्दष्टो यमकस्य त्रिभेदः सन्दंशनस्य च ॥६२८१॥
कर्मभूतेऽथ सन्दष्टः पुंसि समिश्ररूपके ।
गायकानां कण्ठदोषविशेषे परिकीर्त्तितः ॥६२८२॥
सन्धा वधौ प्रतिज्ञायां सन्ध्यासन्धानकर्मणोः ।
सन्धानमधिचाप स्याद्बाणस्यारोपणे तथा ॥६२८३॥
काञ्जकादेरभिषवे काञ्जिके श्लेषणेऽप्यथ ।
सन्धानी रूप्यशालायां स्त्री वार्त्ताक्यन्तरेऽपि च ॥६२८४॥
गिरिप्रयारण्ये त्रिषु तु सन्धिसाधन इष्यते ।
सन्धिस्तु रन्ध्रे नाट्याङ्गे श्लेषे भङ्गसुरङ्गयोः ॥६२८५॥
अन्त्यस्तोमेऽतिरात्रस्य वर्णानां योजनेऽपि च ।
सन्धिन्यकालदुग्धा गौर्वृषाक्रान्ताऽपि गौर्मता ॥६२८६॥
द्विकालदोह्या सन्वेककालं या गौश्च दुह्यते ।
सन्धिला तु सुरुङ्गायां नदीमग्नियोरपि ॥६२८७॥
सन्नमन्येऽत्रसन्न त्रिष्वनुदात्तविशीर्णयोः ।
गते तथेष्यते क्लीं तु सन्नं सत्तौ प्रकीर्त्तितम् ॥६२८८॥
सन्नाह्यो युद्धयोग्येभे सन्नद्धव्ये तु स त्रिषु ।
सप्तकस्तु पुमान्सङ्घे सप्ताना क्लीं तु सप्तकम् ॥६२८९॥
मृगयाक्षादिषु स्त्री तु सप्तकीक्काञ्चिदामनि ।
सप्तम त्रिषु सप्तानां पूरणे सप्तमी पुनः ॥६२९०॥
स्यात्सप्तमविभक्तौ स्त्री दुर्गादन्यास्तिथावपि ।
सप्तर्षिरशी ना सप्तषयश्चित्रशिखण्डिषु ॥६२९१॥
सप्तला नवमान्यां च सातलागुञ्जयोः स्त्रियाम् ।
सभ्यः सामाजिके साधौ सभासाधौ तथा त्रिषु ॥६२९२॥

ना त्वग्निभेदे यागस्थे पूव आहवनीयत ।
त्रि समङ्गो मङ्गयुते प्राणिद्यते तु पुस्ययम ॥६२९३॥
समङ्गा तु नमस्कारीस्तम्बे स्त्री परिकीर्त्तिता ।
समञ्जस क्ली याये त्रि रम्यस्तेऽप्युचितेऽपि च ॥६२९४॥
अथ व्रीह्यादिधानुष्कस्थितिभेदषु प चसु ।
एकस्मि स्या समपद योगार्थे तु यथायथम ॥६२९५॥
समयोऽस्त्री क्रियाकारे भाषानिर्देशसम्पदि ।
सङ्केताचारसिद्धा तकालेषु शपथऽप च ॥६२९६॥
सङ्गमे त्वेष समय पु लिङ्ग परिकीर्त्तित ।
समथस्तु समानार्थे सम्बद्धार्थे हितेऽपि च ॥६२९ ॥
न्याय्य शक्ते तथा भेद्यलिङ्गोऽय परिकीर्त्तित ।
समथन स्थापनायामाक्षिप्तस्य पुनभवेत् ॥६ ९८॥
स्यात्सम्प्रधारणायां च समर्थीकरणेऽपि च ।
समर्याद समीपेऽपि मर्यादासहिते त्रिषु ॥६२९९॥
समवर्त्ती यमे पुसि योगार्थे तु यथायथम ।
समाघातो वधे युद्ध योगार्थे तु यथायथम ॥६३ ॥
समाधिस्तु पुमा ध्याने नीवाके च समथने ।
प्राणिद्यते प्रतिज्ञायां का यालङ्करणा तरे ॥६३ १॥
तुल्यत्वे भेद्यवत्तु स्यात्समानाधिसमा श्रिते ।
समानस्तु पुमान्वायुभेदे देहा तरस्थिते ॥६३ २॥
त्रिस्तु साध्वेकतु येषु मानेन सहितेऽपि च ।
समापन समाप्तौ न तु ना घातेऽवसायने ॥६३ ३॥
समारम्भ सम्यगारम्भणे चाचार इष्यते ।
समाहारस्तु सक्षेपेऽप्येकत्र करणे च ना ॥६३ ४॥
समानाहारकादौ तु लिङ्गाद्य स्याद्यथायथम ।
समाहित मते सम्यगाहिते वा यवत्तथा ॥६३ ५॥
समाधिस्थे परिहृते प्रतिज्ञातेऽपि कीर्त्तितम् ।
समाह्वयो रणे प्राणिद्यूते नाम्न्यथ यौगिके ॥६३ ६॥

समिति परिष स्थाने सङ्गे ससद्युधि स्त्रियाम् ।
समिधस्तु समूहेऽग्नौ युद्धगोधूमपिष्टयो ॥६३ ॥
समीकस्तु समुद्रेऽपि मिथुनेऽपि पुमान्मत ।
समीरण फणिर्जे च वायावाहरणे च ना ॥६३ ८॥
समु च्छ्रयस्तून्नतौ च विरोधेऽपि पुमान्मत ।
समूहे स्या समुदय समरे च समुद्गमे ॥६३ ९॥
समुद्ग सम्पुटे पुास स्या मुद्गसहिते त्रिषु ।
स्यात्समुद्धरण क्लीब वान्ताऽ तेऽप्युन्नयेऽपि च ॥६३१ ॥
समुद्रस्तु पुमान घौ छन्दस्युत्कृतिसञ्ज्ञके ।
आकाशे च तथा सर्ख्याविशेषेऽपि त्रयोदश ॥६३११॥
तेषां ये शतसर्ख्याता क्रमाद्दशगुणोत्तराः ।
त्रिस्तु मुद्राऽन्वितेऽथ क्ली समुद्र देहलक्षणे ॥६३१२॥
समुद्रनवनीत तु च द्रे स्यादमृतेऽपि च ।
समुद्रान्ता तु दुःस्पर्शे कार्पासीस्पृक्कयोरपि ॥६३१३॥
समुन्नद्धो गर्विते च पण्डितम्म यके त्रिषु ।
समुन्नय समुत्क्षेपे तथा समुदये मत ॥६३१४॥
समूढ पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते ।
समूहन तु क्लीब स्यात्सहतीकरणे तथा ॥६३१५॥
शपस्य योजने मौर्व्यां स्त्रिया तु स्यात्समूहनी ।
सम्माज यामवा य तसमूह्यार्थे समूहना ॥६३१६॥
सम्पञ्चूतौ गुणो कर्षे तथा स्त्रीत्वे प्रकीर्त्तिता ।
सम्पुटस्तु समुद्गे च म त्राक्षरग्रथना तरे ॥६३१ ॥
कलिकाया कुरवके पु लिङ्ग परिकीर्त्तित ।
सम्प्रयोगस्तु सुरते संस्तवेऽप्यभिधीयते ॥६३१८॥
सम्प्रेषणी द्वादशाहश्राद्धे स्त्रीत्वे प्रकीर्त्तिता ।
क्ली सम्यक प्रेषण त प्रयुक्तौ सम्प्रेषणा न ना ॥६३१९॥
सम्बाधस्तु भगे स्त्रीणा मेढ्रे कारागृहेऽपि ना ।
स्यात्सङ्कटे तु सम्बाधो मेघवत्परिकीर्त्तितः ॥६३२ ॥

सम्भव कारणोत्पत्त्योः सङ्कते सङ्गमेऽपि च।
मात्यर्थे मापयत्यर्थे तौ चाथा सद्भिरीरितौ ॥६३२१॥
अकर्मको मातिधातुः प्रस्थादीनां घटादिषु।
प्रवर्त्तनेऽन्तर्भावेऽसौ सम्भूत इति सूत्रग ॥६३२२॥
सकर्मको मापयति स्थाल्याद्याधारवस्तु ना।
ग्रहणेऽन्तर्भावनायामाढकादे प्रवर्त्तने ॥६३२३॥
स चायं सम्भवत्यादिसूत्रे सूत्रकृतोदितः।
तत्र ह्याकृष्यते कर्म तद्धरत्यादिसूत्रतः ॥६३२४॥
असम्भवो हेममयजन्तोरेषामसम्भवे।
इत्यादिषु प्रयोगेषु भूयिष्ठेषु कृतात्मभिः ॥६३२५॥
अथ सम्भवशब्दस्य चिन्तनीयो विचक्षणैः।
सम्भावनाऽऽसादने च सम्माने च न ना मता ॥६३२६॥
पात्रस्यान्तर्मापने च तत्र युक्तौ च कीर्त्तिता।
सम्भेदो मिश्रणे चापि भेदेऽपि च पुमान्मतः ॥६३२७॥
सम्भोगो ना रते भोगे हस्तिहस्ते तथास्य च।
तृतीयेंऽशेऽङ्गुलेरूर्ध्वं विभक्तस्य च सप्तधा ॥६३२८॥
सम्भ्रमोऽत्यादरे यत्नत्वे संवेगे च साध्वसे।
स्यात्सम्मतिः स्त्री वाञ्छायामनुज्ञापूजयोरपि ॥६३२९॥
सम्मर्दो मदने पुंसि तथा युद्धे प्रकीर्त्तितः।
सम्मर्शस्तु पुमांस्तर्के तथा सम्मर्शने मतः ॥६३३०॥
सम्मार्जनी तु शोधन्यां स्त्रीलिङ्गे परिकीर्त्तिता।
सम्मार्जना सम्मृष्टौ संशोधनायामपीष्यते ॥६३३१॥
सम्राट् तु पुंसि विष्ण्वर्कहुताशेन्द्रेषु राज्ञि च।
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ॥६३३२॥
शास्ति यश्चाज्ञया राज्ञस्तत्र सम्राट् पुनः स्त्रियाम्।
षड्विंशत्यक्षरेऽन्त्यस्था छन्दोभेदे प्रकीर्त्तिता ॥६३३३॥
सरो वायौ पुमान्क्लीबे तु सरः क्षीरे प्रकीर्त्तितम्।
निषादशुनकीजे द्वे त्रिस्थिरप्रतियोगिनि ॥६३३४॥

सरकोऽस्त्री मणौ शीधुपाने चषकशीधुनो ।
मेघवत्सरक साधुसर्त्तर्येष प्रकीर्त्तित ॥६३३५॥
सरघा तु शुनीभेदे देवानां परिकीर्त्तिता ।
मधुनिर्माणशीले च स्त्रिया स्यान्मक्षिका तरे ॥६३३६॥
सरटी नीलिकालोहे द्वयोस्तु कृकलासके ।
सरणिस्तु स्त्रियाम्मार्गे श्रेणौ च परिकीर्त्तिता ॥६३३ ॥
सरण्डस्तृणसङ्घाते कृमिभेदे तु स द्वयो ।
सरण्युर्नाऽनिले मेघे सूर्यपत्न्यां स्त्रियामियम् ॥६३३८॥
सरधि स्त्री सिरापङ्क्तिसङ्घाताऽम्बसु ना रवौ ।
सरल पूतिकाष्ठारय्यद्रुमे पुसि प्रकीर्त्तित ॥६३३९॥
सरलस्त्रिर्विदग्धे च ऋजौ च प्रियवादिनि ।
सरस्तु सलिले क्लीव तटाके सरसी नना ॥६३४ ॥
महासर सु सरसी दाक्षिणात्या प्रयु जते ।
क्लीब सरस्त्रदाकाशे सरस्नान्नाऽम्बुधौ नदे ॥६३४१॥
सरस्वती नदीमात्रे वाग्देव्यां च नदीभिदि ।
गङ्गायां गवि मेदिन्यां स्त्रीरत्ने च वचस्यपि ॥६३४२॥
तथा तृणलतास्तम्बे मत्स्याक्षीनाम्नि कीर्त्तिता ।
ब्राह्मीति विश्रतारयेऽथ सरस्वान रसिकेऽपि च ॥६३४३॥
सरोयुक्ते तथा मेघलिङ्गोऽय परिकीर्त्तित ।
सरिन्मधा तथा छन्दोभेदे द्वासप्ततिस्वरे ॥६३४४॥
सरीसृपस्तु सर्पे द्वे तथैनोदरसर्पिषु ।
सर्गोऽध्याये स्वभावे च निर्माणे च समुज्झने ॥६३४५॥
उत्साहे निश्चये चापि पुल्लिङ्ग परिकीर्त्तित ।
सजक त्वतिबाले स्याद्दन्नि [स्रष्टरि मेघवत् ] ॥६३४६॥
सजूर्वनस्पतौ विद्युत्यपि स्त्री वणिजि द्वयो ।
सर्पदंष्ट्री वृश्चिकाल्योषध्यां योगे यथायथम् ॥६३४ ॥
सर्पराजो वासुकौ ना द्व तु राजिलभोगिनाम् ।
त्रयोदशानामेकत्र सर्पराज प्रकीर्त्तित ॥६३४८॥

स्यात्सपलोचना रास्नासञ्ज्ञके भेषजे स्त्रियाम् ।
सर्पिजले घ्रते चैव क्लीबलिङ्ग प्रकीर्त्तितम् ॥६३४९॥
सर्वगन्ध तु तक्कोलागरुकर्पूरसयुता ।
एलालवङ्ग वक्पत्रनागकेसरसिल्हका ॥६३५ ॥
ऋद्धिसञ्ज्ञकभैषज्यमदे सवजनप्रिया ।
सर्वज्ञो ना शिवे बुद्धे त्रि तु स्यात्सर्ववेदिनि ॥६३५१॥
अथ ना सर्वतोभद्रो गृहविच्छन्दकान्तरे ।
निम्बवृक्षे च विषमकाव्यालङ्कारभेदके ॥६३५२॥
स्त्रियां तु सवतोभद्रा काश्मर्याभिरव्यपादपे ।
यत्तु सर्वप्रकारेण भद्र तत्र त्रिषु स्मृतम् ॥६३५३॥
सर्वतोमुखमप्सु क्ली ना ब्रह्मक्रतुभदयो ।
सवभक्षा वजाया स्याद्यौगिके तु यथायथम् ॥६३५४॥
स्त्री सवमङ्गला शैलतनयायां च यौगिके ।
सर्वसन्नाह इत्युक्त सन्नद्धौ सर्ववर्मिणाम् ॥६२५५॥
सर्वात्मनाप्व्यय शब्द पुल्लिङ्ग परिकीर्त्तित ।
सर्वौघ सर्वसन्नाहे राज्ञा पुसि प्रकीर्त्तित ॥६३५६॥
मधुमेदे तु सर्वौघ यौगिके तु यथायथम् ।
सर्षपस्त्वोषधीभेदे तुन्दभारये पुमान्मत ॥६३५ ॥
सर्षपी फलिनीवृक्षे स्त्रियां न्याच्य तरेऽपि च ।
सलो भृङ्गिरिटे पुसि क्ली तु पत्राङ्गभेषजे ॥६३५८॥
सलज्ज सत्रपे त्रि क्ली स्तम्बे दमनकाह्वये ।
सलम्बस्त्वृषिभेदे ना तन्तुवाये पुनर्द्वयो ॥६३५९॥
सलिल तु जले छन्दोऽन्तरे प्रकृतिनामनि ।
यत्र चत्वार्यशीतिश्च वर्णा स्युर्वाततोऽधिका ॥६३६ ॥
सल्वा स्त्री क्षत्रियाभेदे देशभेदे नृ भूम्नि ते ।
सवस्तु सूतौ सूत्यायां सुतौ यागे च वर्त्तने ॥६३६१॥
सवन कालभेदेऽपि स्यात्प्रात सवनादिषु ।
यज्ञस्य सोमाभिषवे स्नाने काण्डे नपुंसकम् ॥६३६२॥

यागे तु पुंसि सवनो वनेन सहिते त्रिषु ।
सवर्णो ब्राह्मणाज्जाते क्षत्रियाया विवाहत ॥६३६३॥
त्रिस्तु यवर्णमात्रे च मर्त्ये चाप्येकवर्णके ।
सव्य वामे दक्षिणे त्रि सोतर्यसवितर्ययो ॥६३६४॥
तथा प्रेरयितर्ये च मृतके वनले पुमान् ।
सस्य धान्ये गुणे धान्यस्तम्बे वृक्षादिन फले ॥६३६५॥
सस्यक सस्यसम्पन्नव्रीहिसस्यादिकेषु च ।
तथैव गुणसम्पन्ने मेघलिङ्गमथैष ना ॥६३६६॥
स्यान्नारिकेलसस्यामममणौ खड्गे च सस्यक ।
स्त्रीपुंसयो सहचरी पीतझिण्ट्यारयश्चाटके ॥६३६ ॥
अथो सहचरश्चैष सहचारिणि वा यवत् ।
सहजोऽस्त्री स्वभावे त्र सहोत्पन्नसगर्भ्ययो ॥६३६८॥
सहदेवा स्त्रियां सवे दण्डोपल इति श्रते ।
युधिष्ठिरकनिष्ठे तु नायोगार्थे यथायथम् ॥६३६९॥
सहो जले बले च क्ली हेमन्ते तु पुमानयम् ।
मार्गशीर्षे तु मासि स्यात्पुनपुंसकयोरयम् ॥६३ ॥
सहसानो मयूरे द्वे यजमाने तु स त्रिषु ।
सहसानुर्मयूरे च सर्पे चापि द्वयोर्मत ॥६३ १॥
सहस्रमस्त्री बहुनि शताना दशकेऽपि च ।
सहस्रपत्र कमले क्लीब स्याद्यौगिके त्रिषु ॥६३ २॥
सहस्रवीर्या स्त्रीलिङ्गे स्याद्दूर्वाश्वेतदूर्वयो ।
तथोध्वकण्टकान्यारयशतावर्या प्रकीर्त्तिता ॥६३ ३॥
सहस्रवेधी पुंस्यम्लवेतसे क्ली तु हिङ्गुनि ।
सहा तु पुष्पस्तम्बेषु त्रिषु स्त्री तरणौ तथा ॥६३७४॥
नीलझिण्ट्यां पीतझिण्ट्यामित्यप्यतिबलाह्वये ।
बलासञ्ज्ञे च भैषज्यस्तम्बयोरोषधावपि ॥६३ ५॥
मुद्गपर्ण्यभिधानायां भेधलिङ्ग तु सोदरि ।
सहायस्तु द्वयो सरव्यौ सेवके तु त्रिषु स्मृत ॥६३ ६॥

सहुारस्तु पुमा युद्धेऽ धकारेऽपि प्रकीत्तित ।
चिद्रूपे स्या सहृदयो हृदयेन युते त्रिषु ॥६३ ७॥
सहोक्ति स्यात्स्यलङ्कारभेदेऽाप सहभाषणे ।
सहोरस्तु पुमा विष्णौ पवतेऽपि प्रकीत्तित ॥६३ ८॥
सह्य पर्वतमेदे ना पश्चिमार्णवपाश्वगे ।
सोढ ये त्रिषु सह्य स्यादारोग्ये तु नपुसकम् ॥६३७९॥
सा लक्ष्म्यां सवनाम्नश्च प्रथमैकस्त्रिया तद ।
सांयात्रिक प्रभाते क्ली पुमा पोतवणिज्ययम् ॥६३८ ॥
सांव सरो वा यवत्तु त्रिलिङ्ग परिकीर्त्तित ।
सवत्सरभवादौ च विज्ञेय फलपवणो ॥६३८१॥
विद्याज्ज्यौतिषिके चैव कृष्णशालौ पुन पुमान् ।
स्त्री तु सावत्सरी श्राद्धे कत्त ये वत्सरात्यये ॥६३८२॥
स्या सावत्सरक वषदेयर्णादिषु वा यत्रत् ।
सांव सरिकव योतिविज्ञ तु स्मर्यते नरि ॥६३८३॥
अनिश्चिते साशयिकस्तथा शङ्कावति त्रिषु ।
सा य न्या ययुते नैकादशाहश्राद्धभिद्यपि ॥६३८४॥
सात सुखे क्ली क्षीणे त्रि साती स्यर्थेऽत्र कीर्त्तिता ।
तीव्रायां वेदनायां स्त्री सातिर्दानावसानयो ॥६३८५॥
सा वतो बलदेवे ना द्वे वपत्ये च स वत ।
स्या क्षत्रपूर्व वैश्याजे व्रात्या च हरिपूजके ॥६३८६॥
सा विक स त्वनिवृत्ते त्रिष्वथो सा विकी स्त्रियाम् ।
नाव्यस्थकैशिकीत्यादिवृत्तीनां क्वचिदिष्यते ॥६३८७॥
सात्मा ना प्रकृतावात्मसहिते तु त्रिषु स्मृत ।
अत्य ताभ्यस्तताहेतो प्रकृतित्व गतेऽपि च ॥६३८८॥
सादी सूते तथैवायमश्वारोहे पुमा मत ।
साधन क्ली धने शेफे सिद्धावनुगतौ गतौ ॥६३८९॥
मारणे मृतसस्कारेऽप्युपायेऽप्यर्थदापने ।
सेनाङ्गे यातनायाञ्च न तु ना साधना मता ॥६३९ ॥

